निक्षिप्तमन्त्रेषूक्तार्घ्यतोयस्य अस्त्रविधया भयजनकत्वात् । एतत्तु श्रुति–प्रसिद्धम् ।

अन्यत्र – स्वाशराणां महारक्षसां भीतिदा भयदात्री । भूयः प्रतिदिनं सूर्येण प्रसन्ना । अन्यत्र भूयः सूरिणां महाविदुषामप्यप्रसन्ना । दुर्घटप्रसा–देत्यर्थः । भुवनहितकरी भुवनानां लोकानां हितकरी सन्ध्याप्रणामादिहितो–पदेशकर्त्री । अन्यत्र भुवनहितकरी हनूमदवतारस्य लोकोपकारित्वादिति भावः । स्वैरिणीदुर्निरीक्षा – स्वैरिणीभिः कुलटाभिः दुर्निरीक्षा द्रष्टुमशक्या । कुलटानां सप्रकाशप्राचीविलोकनस्य वैफल्यसम्पाद–कत्वादिति भावः । अन्यत्र स्वैरिणीभिः कुलटाभिः दुर्निरीक्षा द्रष्टुम–शक्या । हनूमतो महायोगित्वेन साकूततद्विलोकनस्यानर्थक्यसम्पादकत्वादिति भावः । अभीक्ष्णं मङ्क्षु – **अभीक्ष्णं मङ्क्षु शीघ्रं स्यात्** इत्यमर–शेषः । **मङ्क्षूदपातिपटलैर्वननीरदानामिति माघश्च** । मुकुळित–कमलस्फूर्तिकारिणी – मुकुळितानां कमलानां स्फूर्तिकारिणी विकास–ज्ञापिका । अन्यत्र मुकुळितकमलानां पद्मकोशानां स्फूर्तिरिव स्फूर्तिः तत्कारिणी । पद्मसदृशत्वेन प्रकाशमाना एतच्च अमलकमलवर्णं प्रज्वलत्पावकाक्षम् इति मन्त्रध्यानादौ प्रसिद्धम् । इयञ्च – **हंसीव कृष्ण ते कीर्तिः स्वर्गङ्गामवगाहत** इत्यादिवदुपमानोपमेयमुखे रक्तरूपो–द्वहनाशरभयप्रदानादिसमानधर्मोपमानानां शब्दैरुपात्तत्वात् पूर्णोपमा । सादृश्यत्वेऽलङ्कारत्वमुपमानत्वमिति उपमासामान्यलक्षणं बोध्यम् ॥ ३ ॥

**अह्नामह्नायपत्युः कबळनसमये पाकभावस्य भूयः**
**क्रोधादुन्मुक्तशम्बक्षतिररुणरुचिस्स्वर्गनेतुर्मघोनः ।**
**मुग्धाया वीरलक्ष्म्या नखरहतितया यत्कपोले व्यलासीत्**
**सीताशोकापनेता स दिशतु सकलां सम्पदं मारुतिर्वः ॥**
**॥ ४ ॥**

**अह्नामिति** । पाकभावस्य पाकत्वेन प्रतीयमानस्य । **पोतः पाकोऽर्भको डिम्भः** इत्यमरः । अह्नां पत्युः – सूर्यस्य । असमासत्वान्न भसंज्ञा । कबळनसमये ग्रासावसरे अह्नाय झटिति भूयः क्रोधात् अधिकरोषात् । **कोपक्रोधामर्षरोष** इत्यमरः । स्वर्गनेतुः[१] इन्द्रात् उन्मुक्तशम्बक्षतिः उत्क्षिप्तदम्भोळिक्षतिः । अरुणरुचिः – रक्तकान्तिस्सती यत्कपोले – यस्य कपोलप्रदेशे मुग्धायाः – बालभावं प्राप्तायाः वीरलक्ष्म्याः – वीरश्रीरूपायाः कामिन्याः । अत्र हनूमतो बालत्वेन वीरलक्ष्म्याः बालभाववर्तनमौचित्यादायातमिति भावः । नखरहतितया – नखक्षतत्वेन । व्यलासीत् – व्यशोभत – लसतेर्लुङ् । नखक्षतेररुणत्वेन वर्तनं कविसंरम्भगोचरमिति भावः । सीताशोकापनेता अभिज्ञानप्रदानपुरस्सररामवृत्तान्तकथनेन सीताशोकापसरणकर्ता स मारुतिः हनुमान् सकलां समग्रां सम्पदं लक्ष्मीं वः दिशत्विति सम्बन्धः । अत्र स्वरूपोत्प्रेक्षालङ्कारः। स च इवादिशब्दाभावेऽपि – **त्वत्कीर्तिभ्रमणश्रान्त्येत्यादिवद्गम्यः**[२] ॥ ४ ॥

**ग्रासानेहप्रसक्तं तरुणितमरुणं बिभ्रदं भोजबन्धोः**
**प्रागद्रेर्मुद्रितं चोत्प्लवनविधिवशात् धातुलौहित्यमार्द्रम् ।**
**यद्वक्त्रं प्रौढगुञ्जाफलघटितलसन्मञ्जरीमञ्जिमाढ्यं**
**सोऽयं कायं वहन्तीं श्रियमिह तनुतामञ्जनानन्दनो वः ॥**
॥ ५ ॥

---

१. स्वर्गप्रभोः स्वर्गनेतुरिति विशेषणं सर्वदेवानाममितप्लवनिवारणे स्वतन्त्रबोधकम् । मघोनः ।

२. मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैः इवशब्दोऽपि तादृशः ॥
इत्युत्प्रेक्षाव्यञ्जकत्वेन परिगणितानां शब्दानां प्रयोगे वाच्याः । तेषामप्रयोगे गम्योत्प्रेक्षा । यथा – त्वत्कीर्तिभ्रमणश्रान्त्या विवेश स्वर्गनिम्नगाम् ॥ इति । (कुवलयानन्दे उत्प्रेक्षालङ्कारप्रकरणम्)

ग्रासानेहप्रसक्तमिति । अम्भोजबन्धोः सूर्यस्य ग्रासानेहप्रसक्तम् – ग्रासकालप्राप्तं, कालो दिष्टोऽप्यनेहापि समयोऽप्यथ पक्षतिरित्यमरः । अरुणितम् – सद्यस्तनम् अरुणम् – रक्तवर्णम् । गुणे शुक्लादयः पुंसीति कोशबलात् अत्रारुणशब्दो रूपपरः । तद्बिभ्रत् – दधानमिव । बालसूर्यस्य अरुणत्वेन प्रतीयमानत्वादिति भावः । उत्प्लवनविधिवशात् – सूर्यं ग्रसितुमुत्क्षेपणाख्यक्रियावसरे प्रागद्रेः – उदयाचलसकाशात् । मुद्रितम् – लग्नम् । आर्द्रं सद्रवं । धातुलौहित्यम् – धातूनां गैरिकादिधातूनां सम्बन्धि लौहित्यम् आरुण्यं बिभ्रदिवेत्यनुषङ्गः । यद्वक्त्रम् – यस्य मुखम् । वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखमित्यमरः । प्रौढगुञ्जाफलघटितलसन्मञ्जरीमञ्जिमाढ्यम् – प्रौढानि यानि गुञ्जाफलानि । आस्ये नीला तु गुञ्जिकेत्यमरशेषः । उक्तं च कविकुलगुरुभिः कालिदासैः सकलजननीस्तवे शबरीध्यानप्रकरणे – लुठद्गुञ्जाहारस्तनभरलसन्मध्यलतिकामिति । प्रौढगुञ्जाफलैः – घटिता – निर्मिता या लसन्ती मञ्जरी – गुच्छविशेषः । तद्वन्मञ्जिम्ना मञ्जुभावेन । आढ्यम् – दर्शनीयम् । आढ्यशब्दः प्रभुपरोऽप्यत्र भाक्तः । सोऽयम् – स एषः । अञ्जनानन्दनः – कायं वहन्तीम् – मूर्तिमतीम् । श्रियम् – सम्पदम् । इह – इदानीम् । वः – युष्माकम् । तनुताम् – दद्यादिति सम्बन्धः । अत्र पद्ये – ग्रासानेह–प्रसक्तम् इत्यत्र प्रागद्रेर्मुद्रितञ्चोत्प्लवनविधिवशादित्यत्र च उत्प्रेक्षा–लङ्कारः । प्रौढगुञ्जाफलघटितम् इत्यादौ च स्वभावोक्त्यलङ्कारः[१] ॥ ५ ॥

**भूयस्संक्रुद्धनाकिप्रवरकरपुटीमुक्तदम्भोळिधारा**
**सम्पातव्यूढचिह्नं वदनकमलकं लोहितं वायुसूनोः ।**

---

१. स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य वर्णनम् ।
कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम् ॥

(चन्द्रालोकः – ९३ अलङ्कारः)

साधीयस्वीयदंष्ट्रादळिततटतया दर्शनीयस्य भानोः
तादात्म्येनोह्यमानं शुचमतिकुटिलामुच्चकैरुच्छिनत्तु ॥
॥ ६ ॥

भूयस्संक्रुद्धेति । भूयस्संक्रुद्धस्य – अत्यन्तकुपितस्य । नाकिप्रवरस्य – इन्द्रस्य । करपुटी – करप्रदेशः । तस्मान्मुक्तो – यो दम्भोळिः । तस्य धारा – तस्यास्सम्पातः । तेन व्यूढचिह्नम् । प्राप्तकिरणं – लोहितम् अरुणम् । वायुसूनोः वदनकमलकम् – हनुमतो बालभावस्य वर्ण्यतया अल्पार्थे कप्रत्ययः । साधीयसी या स्वीया या दंष्ट्रा । तया । दळितः तटः । तद्वत्तया दर्शनीयस्य – दृष्टिप्रियस्य । भानोः सूर्यस्य । तादात्म्येन – तत्त्वेन । ऊह्यमानम् । अतिकुटिलाम् – अतिक्रूराम् । शुचम् – शोकम् । उच्चकैः – दूरम् । उच्छिनत्तु – भिनत्तु । अत्र रूपकालङ्कारः[1]। उपमालङ्कारो[2] वा । अथवा पदार्थैक्यारोपप्रयुक्तो निदर्शनालङ्कारः[3]। पदार्थहेतुकं काव्यलिङ्गालङ्कारो[4] वा – दंष्ट्रादळितसूर्यसादृश्यस्य दम्भोळिदळितक्षतिमूलकत्वात् ॥ ६ ॥

चण्डीभर्तुः किरीटोपरिघटितकलाकोटिकौटिल्यचोरं
दंष्ट्रायुग्मं समिन्धे विशदमसरळं कीशपृथ्वीशतुस्तत् ।
विष्फायद्वीररौद्राभिदपटुरसयोरप्रतिद्वन्द्ववाचोः ।
शृङ्गद्वन्द्वं प्ररूढं दृढमिव सदृशत्वेन चान्योन्यमुच्चैः ॥
॥ ७ ॥

---

१. तद्रूपकमभेदो यः उपमानोपमेययोः । (काव्यप्रकाशः १०–६)
२. साधर्म्यमुपमा भेदे पूर्णा लुप्ता च । (काव्यप्रकाशः १०–१)
३. पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनाम् ।
त्वन्नेत्रयुगलं धत्ते लीलां नीलाम्बुजन्मनोः ॥ (कुवलयानन्दः)
४. काव्यलिङ्गं हेतोः वाक्यपदार्थता । (काव्यप्रकाशः १०–३०)

चण्डीभर्तुरिति । चण्डीभर्तुः – शिवस्य किरीटोपरि – कपर्दभागे । घटिता या चन्द्रकला । तत्कोटेः – तदग्रभागस्य । कौटिल्यम् – वक्रता । तच्चोरं – तद्वद्वक्रमित्यर्थः । विशदं – निर्मलम् । असरळम् – तीक्ष्णं । दंष्ट्रायुग्मम् – दंष्ट्रायुगळं – तद्दंष्ट्रायुगळम् । कीशपृथ्वीशतुः – हनूमतः । विष्फायन्तौ – वर्धमानौ, वीररौद्राभिधौ वीररौद्राख्यौ यौ रसौ । अप्रतिद्वन्द्ववाचोः सदृशवस्तुकथाशून्ययोः तयोः अन्योन्यं सदृशत्वेन उच्चैः प्ररूढं शृङ्गद्वयमिव समिन्धे । अत्र सिद्धविषया स्वरूपोत्प्रेक्षा[1] ॥ ७ ॥

**व्याकृत्यभ्यासमन्तः कतिपयनिमिषान् चेतसा कारयित्वा**
**सद्यस्सम्प्रेषितोऽर्को गुरुरिति तरसा मुक्त एव ग्रसित्वा ।**
**येनासीत्पास्यमानप्रवयसि पयसि स्वैरमुच्चण्डवृत्त्या**
**स स्तोतव्यः कथं वा त्रिजगति चतुरैर्हन्त धीमान् हनुमान्**
**॥ ८ ॥**

व्याकृतत्यभ्यासमिति । व्याकृतिरिन्द्रव्याकरणम् । स्त्रियामिति क्तिन् । अभ्यासम् । अन्तः हृदये कतिपयनिमिषान् – कियन्तं कालम् । चेतसा – कर्त्रा । कारयित्वा । कतिपयनिमिषानिति अत्यन्तसंयोगे द्वितीया । अर्कः सूर्यः। तरसा – शीघ्रेण । सद्यः सम्प्रेषित इव ग्रसित्वा । येन – हनूमता । मुक्त इव । अत्र तरसेति विशेषणम् । चिरकालं गुरुसन्निधाने अपचारशङ्क्या अप्रयोजिकत्वशङ्क्या वा अथवा जगत्प्रकाशार्थं सञ्चरिष्णोः सूर्यस्य अभ्यर्णस्थानमनुचितमिति वा । पास्यमानप्रवयसि पयसि स्तनन्धयतादशायां मे मन आसीत् । येनेत्थं स धीमान् – हनूमान् । त्रिजगति – जगत्त्रये चतुरैः – कृतिभिः । कथं

---

१. सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥
(चन्द्रालोकः – १२ तमोऽलङ्कारः)

स्तोतव्यः – केन प्रकारेण स्तोतव्य इत्यर्थः । अत्र धीमानिति विशेषणं सूर्यस्य तरसा प्रेषणे साभिप्रायम् । उत्प्रेक्षालङ्कारः ॥ ८ ॥

**दष्ट्वोन्मुक्तस्य भानोर्दृढमतिरभसात् मारुतेर्वक्त्रभागात्**
**भूयो न श्रान्तिहेतुर्ग्रहणविधिकृतः सैंहिकेयाद्विमोक्षः ।**
**शुण्डावर्तोज्झितस्य प्रमदकरिपतेः कस्यचित्क्षीणशक्ते-**
**रङ्गुल्यावेष्टनञ्च क्षितिषु तनुमतः कस्य वा बाधकं स्यात्**
**॥ ९ ॥**

दष्ट्वोन्मुक्तस्येति । मारुतेर्हनूमतः वक्त्रभागात् – गल्लकुहरात् । दष्ट्वोन्मुक्तस्य – उज्झितस्य । भानोः – सूर्यस्य । ग्रहणविधिकृतः – उपरागप्रयुक्तः । सैंहिकेयात् – स्वर्भानोः विमोक्षः – विमोचनम् । भूयो न शान्तिहेतुः – नातिक्लेशजनकम् । यथा प्रमदकरिपतेः – समद-गजस्य । शुण्डावर्तोज्झितस्य – शुण्डावलयविमुक्तस्य । कस्यचित् तनुमतः – मानवस्य अङ्गुल्यावेष्टनम् – अङ्गुलिवलयनियन्त्रणम् । क्षितिषु लोकेषु । किमिति बोधकं स्यात् – किमिति बोधकं भवेदित्यर्थः । स्वभावोक्त्यलङ्कारः ॥ ९ ॥

**शश्वज्जीवी हनूमानजनि दिविषदामेव सारै –**
**रित्येवं मोघवादः क्वनु स दिविषदः कुत्र वा स्वल्पभासः ।**
**पायं पायं चरित्रामृतरसममलं राघवेन्दोः श्रुतिभ्यां**
**नित्योऽभून्निर्जरस्सन्निति भुवि सुधियां तात्त्विकश्चैष पन्थाः**
**॥ १० ॥**

शश्वज्जीवीति । हनूमान् – दिविषदां – देवानाम् । आदितेया दिविषद इत्यमरः । आशिषां सारैरेव – आशीर्बलैरेव । सारो बले स्थिरांसि चेत्यमरः । शश्वज्जीवी – चिरजीवी । अजनीत्येवं वादः –

प्रमोघः – मोघः मृषा । स हनूमान् क्व नु । स्वल्पभासः – ईषत्तेजस्काः। दिविषदः क्व नु । अल्पतेजसामाशिषां बलैरुत्कृष्ट तेजसश्चिर-जीवित्वमनुपपन्नमिति भावः । अमलं राघवेन्दोः रामचन्द्रस्य चरित्रा-मृतरसं कथासुधाम् । श्रुतिभ्याम् । पायं पायमिति णमुल् । पीत्वा पीत्वा । अतिशयार्थे वीप्सा । निर्जरस्सन् – जरारहितस्सन् इत्यर्थः । अभूत् – नित्यो बभूवेत्यर्थः । इति एवं भुवि सुधियां – विदुषाम्, एषः प्रतिपादितः । पन्थाः – मार्गः तात्विकः – प्रामाणिक इति भावः । अत्र हनूमच्चिरजीवित्वे स्वल्पतेजस्कदिविषदाशीर्निमित्तत्वं निरस्य रामकथा-सुधापानहेतुकत्वसमर्थनादनुमानालङ्कारः । चरित्रस्यामृतत्वनिरूपणे राघवेन्दोरिति वाक्यार्थाधीनत्वात् काव्यलिङ्गमलङ्कारः ॥ १० ॥

**उद्दिश्योग्रं प्रसर्पज्ज्वलदनलनिभं संयुगे वीक्ष्य शूलं**
**छित्वा तत्कौम्भकर्णं प्लुतमुपरि पतन्नञ्जनानन्दनान्यः ।**
**श्वेतारण्ये पतन्तं कुपितयमकराद्दण्डमुच्छिद्य चण्डं**
**कीशाधीशं मृकण्डोस्सुतमिव रभसादीशवत् को न रक्षेत्**
**॥ ११ ॥**

उद्दिश्योग्रमिति । संयुगे – युद्धे । उद्दिश्य । उग्रं – भयङ्करम् । प्रसर्पज्ज्वलदनलनिभम् – व्याप्रियमाणप्रौढज्वलदनलनिभम् – व्याप्रिय-माणप्रौढज्वलदनलसदृक्षम् । कौम्भकर्णं – कुम्भकर्णसम्बन्धि तत्प्रयुक्त-मित्यर्थः । उपरि – ऊर्ध्वभागे। पतत् – शूलम् । छित्वा – उच्छिद्य । श्वेतारण्ये श्वेतपवने । कुपितयमकरात् – क्रुद्धयमहस्तात् । पतन्तं – पतिष्णुम् । चण्डम् – उद्धवृत्तम् । दण्डम् । छित्वा । मृकण्डोस्सुतं – बालम् इव ईशवत् अञ्जनानन्दनान्यः – हनूमदन्यः । कीशाधीशम् – सुग्रीवम् । को नु रक्षेत् – कः पायात्? अत्र ईशवदिति दृष्टान्तबलेन हनूमत्यनितरसाधारणं धौरन्धर्यं ध्वन्यते ॥ ११ ॥

**सौमित्रिं शत्रुभावाद्रणभुवि शयितं नावहत् त्वत्पितेति –**
**व्रीडोद्रेकप्रवृत्तिं धुरि जनयितुं युध्यतः शक्रजेतुः ।**
**स्वांसे तस्यैव वोढा स्रज इव ववृधे यं पुमान्निष्प्रमोदं**
**सोऽयं सर्वार्तिहारी प्रभवतु भवतामञ्जनायाः कुमारः ॥**
**॥ १२ ॥**

**सौमित्रिमिति** । शत्रुभावात् – शत्रुत्वाद्धेतोः । रणभुवि – युद्धभूमौ । शयितं – शयानम् । सौमित्रिम् – लक्ष्मणम् । त्वत्पिता – रावणः । नावहत् – वोढुं नाशकत् इति । व्रीडोद्रेकप्रवृत्तिम् – अधीनलज्जाव्यापारम् । युध्यतः – युद्धं कुर्वाणस्य – निकुम्भिला–स्थाने । शक्रजेतुः – इन्द्रजितः । धुरि – अग्रे । जनयितुम् । स्वांसे – स्वीयभुजे । तस्यैव । स्रज इव लक्ष्मणस्यैव । वोढा – तमेव धृतवान् – कर्मणि षष्ठी । एवं भूतो यः पुमान् निष्प्रमोदम् । ववृधे – अवर्धत । स तादृशः । अञ्जनायाः कुमारः । भवताम् । सर्वार्तिहारी – सकलसङ्कट–निवारकः । प्रभवतु – भवतादित्यर्थः । हेतूत्प्रेक्षा[१] ॥ १२ ॥

**रौद्रस्स्फारः पुरारेर्द्युमणिकुलपतेर्जीवितं बाह्यमग्र्यं**
**सीताशोकाख्यवह्नेः प्रशमनकरणे शीतला वारिधारा ।**
**रक्षाबन्धः करस्थः परिकलितफलो लक्ष्मणस्याग्रवृत्ते –**
**रस्तु श्रेयस्समृद्ध्यै पथि पथि भवतामक्षयाहन्त्वहन्ता ॥**
**॥ १३ ॥**

**रौद्र इति** । पुरारेः – परमेश्वरस्य । रौद्रः – रौद्ररसः । स्फारः – सान्द्रः मूर्त इत्यर्थः । द्युमणिकुलपतेः – रामस्य । अग्र्यं – बाह्यम् । जीवितं बहिश्चरः प्राण इति यावत् । अग्र्यमिति विशेषणं लक्षणाधिक्य–

---

१. प्रतीयमानाभेदाश्च प्रत्येकं [illegible] ॥ [illegible]

सूचनाय । सीताशोकाख्यवह्नेः – जानकीदुःखदहनस्य । शीतला – अभिज्ञानमुद्राप्रदानद्वारा शैत्यसम्पादक इत्यर्थः । उग्रवृत्तेः – तीक्ष्णतेजसः लक्ष्मणस्य परिकलितफलः – द्रोणाचलानयनद्वारा दृष्टफल इत्यर्थः । करस्थः रक्षाबन्धः करस्थापितरक्षाबन्धवदुपद्रवनिवारक इत्यर्थः । अत्र रक्षाबन्धत्वनिरूपणं नैयत्यसूचनाय । अक्षयाहन्त्वहन्ता – हनूमान् । भवताम् । श्रेयस्समृद्ध्यै – समृद्धाय श्रेयसे । पथि पथि – सर्वत्र । अस्तु – भूयादित्यर्थः । अत्र अतिशयोक्तिस्स्वभावोक्तिर्वालङ्कारः[१] ॥ १३ ॥

**वीरश्रीमौळिरत्नं विधुचिकुरमहास्वर्णसन्धानरत्नं**
**काकुत्स्थास्थानरत्नं कपिनिचयविभोः प्रौढनासीररत्नम् ।**
**चिन्तारत्नं श्रितानां त्रिभुवनमहितं मैथिलीभक्तरत्नं**
**श्रीवायोः पुत्ररत्नं घटयतु भवतां चिन्तितं कीशरत्नम् ॥**
**॥ १४ ॥**

**वीरश्रीमौळिरत्नमिति** । वीरश्रीमौळिरत्नं – वीरश्रियः वीरलक्ष्म्याः मौळिरत्नं – सीमन्तभूषणम् । विधुचिकुरस्य – शिवस्य, महास्वर्णस्य – तेजः काञ्चनस्य, सन्धानरत्नं – घटकयोग्यमित्यर्थः । काकुत्स्थस्य – राघवस्य, आस्थानरत्नं – सभाभूषणमित्यर्थः । कपिनिचयविभोः – सुग्रीवस्य प्रौढनासीररत्नं – सेनामुखरक्षकमित्यर्थः । श्रितानामाश्रितानां, चिन्तारत्नं – चिन्तामणिः । त्रिभुवनमहितं – त्रिलोकपूज्यं मैथिल्याः – सीतायाः भक्तरत्नं – श्रेष्ठमित्यर्थः । **रत्नं सजाति श्रेष्ठेऽपीत्यमरः** । अत्र

---

१. निगीर्याध्यवसानं तु प्रकृतस्य परेण यत् ।
प्रस्तुतस्य यदन्यत्वं यद्यर्थोक्तौ च कल्पनम् ॥
कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः ।
विज्ञेयातिशयोक्तिः सा ॥ (काव्यप्रकाशः १०–१२)

त्रिभुवनमहितमिति विशेषणं भक्तावकृत्रिमत्वद्योतनाय । श्रीवायोः – श्रीमतो वायुदेवस्य पुत्ररत्नं – पुत्रश्रेष्ठ इत्यर्थः । अत्र श्रीमत्वविशेषणं पुत्रलाभसार्थक्यसम्पादनाय । कीशरत्नं – हनूमान् । भवतां चिन्तितं – वाञ्छितम् । घटयतु – दद्यादित्यर्थः । अत्र स्वभावोक्त्यलङ्कारः ॥१४॥

**आसज्योच्चैः पुरस्ताद्रणभुवि वसतो रक्षसामेव नेतुः**
**कैलासोद्धारवेळाद्विगुणितरभसोच्चण्डदोर्दण्डशक्तेः ।**
**मुष्ट्याघातः कठोरो यदुरसि निपतन्न त्वचो गोचरोऽभूत्**
**तत्तादृग्वायुसूनोस्स्तुतिषु कवयतां मौनमेवार्यताङ्गम् ॥**
**॥ १५ ॥**

**आसज्येति** । रणभुवि – युद्धदेशे । पुरस्तादग्रे । वसतः – स्थितस्य । कैलासस्य उद्धारवेला उच्चाटनसमयः, तस्मिन् द्विगुणितरभसेन अधिकवेगेन उच्चण्डदोर्दण्डशक्तेः – उद्दण्डदोर्बलस्य । रक्षसामेव नेतुः– रावणस्यैव । आसज्य – सन्धाय प्रयुक्त इति शेषः । मुष्ट्या कठोरः निष्ठुरः – मुष्ट्याघातः – मुष्टिप्रहारः । यदुरसि निपतन् । त्वचो गोचरो नाभूत् – त्वगिन्द्रियेणापि न गृहीत इत्यर्थः । प्रहरणजन्यवेदनानुभवः शशविषाणकल्प इति भावः । स एव तादृशः तत्तादृक् अनन्यसदृश इत्यर्थः । वायुसूनोः – वायुकुमारस्य । स्तुतिषु । कवयतां – महाकवीनाम् । मौनमेव आर्यतांसं – प्रतिष्ठासम्पादकमित्यर्थः । स्तोतुं न कोऽपि समर्थ इति भावः । अतिशयोक्त्यलङ्कारः ॥ १५ ॥

**क्षोणीभागः पदाधो भवति जयरथस्सारथिर्यस्य वेग**
**स्सेना चोद्वृत्तशक्तिः प्रबलमथने निस्सहायत्वमेव ।**
**मुष्टिश्शस्त्रास्त्रजालं समिति खररुषः शत्रवः कीदृशो वा**
**जित्वाऽऽदत्ते हनूमान् जगति जयरमामन्तिकस्थां वरीतुम् ॥**
**॥ १६ ॥**

**क्षोणीभाग इति ।** यस्य जयरथः – विजयस्यन्दनं पदाधः क्षोणीभागः – पदन्यासाक्रान्तभूमिरेव । सारथिर्यस्य सारथिः वेग एव । उद्धृतशक्तिः सेना च परबलमथने – निस्सहायत्वमसहायतैव । शस्त्रास्त्रजालं – मुष्टिरेव । समिति – युद्धे । खररुषः – उग्ररोषा शत्रवः – कीदृशो वा ये केचिद्वा । स हनूमान् तान् शत्रून् जित्वा जगति – लोके । वरीतुं अन्तिकस्थां जयरमां – जयश्रियम् । आदत्ते – स्वीकुर्यात् । अत्र हनूमतः प्रसिद्धजयसामग्रीं विना जगज्जयकथनात् [1]विभावनालङ्कारो व्यज्यते ॥ १६ ॥

**प्रस्तुत्ये वस्तुगत्या त्वगिव फणिपतिर्यस्य सत्वे लघीयान्**
**धैर्योद्दामत्ववार्तास्वखिलकविमतस्स्यात्सुमेरुश्च भीरुः ।**
**जात्या खञ्जं मनोऽपि प्रजवि जववतामेव शश्वत्प्रसङ्गे**
**तादृक्षं कस्स्तुवीत क्षितिषु जयरमोल्लासकं रामदासम्**
**॥ १७ ॥**

**प्रस्तुत्य इति ।** वस्तुगत्या – स्वभावतः, यस्य सत्वे – बले प्रस्तुत्ये – यदीयबलप्रशंसायाम् । फणिपतिः – शेषः, त्वगिव – लघीयान् अतिलघुरित्यर्थः । धैर्योद्दामत्ववार्तासु – उद्दामधैर्यप्रसङ्गे । अखिलकविमतः – सकलकविभिर्महाधीरत्वेन अभिमतः । वर्णितः सुमेरुश्च मेरुरपि – मेरुस्सुमेरुर्हेमाद्रिरित्यमरः । भीतस्स्याद्भवितेत्यर्थः । जववतां – वेगवतां प्रसङ्गे – प्रस्तावे, प्रजवि मनोऽपि । जात्या खञ्जं – जन्मप्रभृति खञ्जमित्यर्थः । क्षितिषु – लोकेषु । जयरमोल्लासकं – जयलक्ष्मीरञ्जकं रामदासं हनूमन्तं कस्स्तुवीत – स्तोतुं न कोऽपि समर्थ इत्यर्थः ।

---

१. विभावना विनापि स्यात् कारणं कार्यजन्म चेत् ।
(चन्द्रालोकः – ७२ श्लोकः)

[1]स्वभावोक्तिरतिशयोक्तिर्वा अलङ्कारः ॥ १७ ॥

**निस्स्तारो वारिराशेः कियदधिकपदन्यासमात्रं पुरस्तात्**
**पाञ्चालीसद्म लङ्का विहतिवनसमुत्पाटनं पुष्पलावः ।**
**अक्षक्रीडाक्षयस्य क्षतिरभिमुखता रावणस्याङ्गहारो**
**यद्दृष्ट्या स व्यपायं हरतु सकरुणं मारुतिर्वस्समग्रम् ॥**
**॥ १८ ॥**

निस्स्तार इति । वारिराशेः – समुद्रस्य । निस्तारः – तरणम् । पुरस्तात्पुरो भूमौ । कियदधिकपदन्यासमात्रं – किञ्चिदधिकपदन्यास-मात्रपर्यन्तगमनसदृश इत्यर्थः । लङ्का – लङ्काप्रदेशः । पाञ्चालीसद्म पाञ्चालीगृहप्रदेशसदृशमित्यर्थः । विहृतिवनसमुत्पाटनम् – अशोकव-नोन्मूलनं पुष्पलावः – पुष्पापचयस्थानापन्नमित्यर्थः । अक्षयस्य क्षतिः – अक्षकुमारहननम् । अक्षक्रीडा – अक्षैर्विहरणम् । रावणस्याभिमुखता – अग्रस्थितिः अङ्गहारः अङ्गविक्षेपकमित्यर्थः । अङ्गहारोऽङ्गविक्षेप इत्यमरः । यद्दृष्ट्या – यद्बुद्ध्या स हनूमान् । सकरुणं – सदयम् वः – समग्रं व्यपायं हरतु – हन्यादिति सम्बन्धः । [2]अतिशयोक्त्यलङ्कारः ॥ १८ ॥

**लङ्कापुर्यां हसन्त्यां रजनिचरवधूसंसदिङ्गालखण्डान्**
**उद्धृत्य स्वर्णरेखां महिदुहितृमयीं रामशोकाभितप्ताम् ।**

---

१. रूपकातिशयोक्तिस्स्यात् निगीर्याध्यवसानतः ।
(चन्द्रालोकः – ३१ श्लोकः)
स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य वर्णनम् ।
(चन्द्रालोकः – १५९ श्लोकः)

२. रूपकातिशयोक्तिस्स्यात् निगीर्याध्यवसानतः ।
(चन्द्रालोकः – ३१ श्लोकः)

त्वष्ट्रा येनेव चौर्याद्दशमुखनिहितां दर्शितां स्वां गृहीत्वा
तुष्टोऽभूद्राघवेन्दुस्तमतिमतिभरं मारुतिं सम्प्रपद्ये ॥

॥ १९ ॥

लङ्कापुर्यामिति । लङ्कापुर्येव हसन्ती तस्याम् । रजनिचरवधूसंसदिङ्गालखण्डान् – परिवारकराक्षसस्त्रीमयानिङ्गालखण्डान् इङ्गालशब्दो देशीयः निर्वह्निदग्धकाष्ठपरः । तानुद्धृत्य महिदुहितृमयीं – सीतामयां कृदिकारादक्तिन इति महीशब्दस्य इकारान्तः। रामशोकाभितप्तां – स्वर्णरेखां चौर्यात् दशमुखनिहिताम् । येन त्वष्ट्रा विश्वकर्मणा दर्शितां स्वां – स्वीयां गृहीत्वा – लब्ध्वा राघवेन्दुः – रामचन्द्रः । तुष्टोऽभूत् – सन्तुष्टो बभूवेत्यर्थः । अतिमतिभरम् – अत्यन्तमतिं तं मारुतिं सम्प्रपद्ये – उपासे। अत्र [1]सावयवरूपकालङ्कारः [2]प्रहर्षणा–लङ्कारश्च ॥ १९ ॥

चेतःपीठेऽपि बद्ध्वा त्रिभुवनजठरं सर्वदा रामभद्रं
भद्रस्थानं प्रसूनैः प्रसुकृतसुलभैरान्तरैरर्चयामि ।
इत्युद्बोधाय भूयो दिशि दिशि जगतामंसदेशो तमाजौ
धृत्वा यः प्राक्चकाशे दिवि भुवि विदितं तं हनूमन्तमीडे

॥ २० ॥

चेतःपीठ इति । चेतः पीठे – हृदयाख्यपीठे । त्रिभुवनजठरमपि – जठरस्थत्रिभुवनमपि । भद्रस्थानं – शुभावासं तं प्रसिद्धं रामभद्रं – श्रीरामं सर्वदा बद्ध्वा भक्त्येति शेषः । प्रसुकृतसुलभैः उत्कृष्टतपसां

---

१. तद्रूपकभेदो यः उपमानोपमेययोः – समस्तवस्तुविषयं श्रौताः आरोपिताः। (काव्यप्रकाशः १० तमोल्लासः)

यदा श्रौताः आर्थाश्च ते यस्मिन् एकदेशविवर्ति तत्साङ्गमेतत् (उक्तद्विभेदं सावयवम्)

२. उत्कण्ठितार्थसंसिद्धिः विना यत्नं प्रहर्षणम् । (चन्द्रालोकः श्लो० १२६)

सुलभैः । आन्तरैः प्रसूनैः कुसुमैः – अहिंसादिभिरष्टभिः पुष्पैरर्चयामि । इति – इत्थं जगतां – प्राणिनाम् । उद्बोधाय – ज्ञापनाय । आजौ – युद्धे । अंसदेशे धृत्वा । यः दिशि दिशि प्राक् चकाशे । टित आत्मनेपदानामित्येत्त्वम् । भूयो दिवि भुवि विदितं – स्वर्गे भूलोके च विदितं प्रसिद्धं तं हनूमन्तम् ईडे – स्तौमि । ईड – स्तुताविति वर्तमाने लट् । [1]हेतूत्प्रेक्षा ॥ २० ॥

**बालः कोऽप्यन्ववाये तव खलु भविता मद्वशे सम्प्रदेय-**
**स्तं चार्चिष्यामि चित्ते चिरतरमहमित्यर्कमाकृष्य चान्तः।**
**आदातुं राघवेन्दुं रहसि करतलात्तस्य तं चाग्रसद्यो**
**सद्यो विद्योततां वो धुरि धुरि मरुतः पाकभूतो हनूमान्**
**॥ २१ ॥**

बाल इति । कोऽपि बालः – अन्यादृशगुणसम्पन्नः शिशुः तव अन्ववाये – वंशे वंशोऽन्ववाय इत्यमरः । मद्वशे सम्प्रदेयः भविता स्यतासीति भुवो लुट् । चित्ते – मनसि तं चार्चिष्यामि–पूजयिष्यामि । चिरतरं – चिरकालम् । अर्कमाकृष्य । तस्य करतलात् राघवेन्दुं – रामचन्द्रमादातुमिव यः तमर्कम् अग्रसत् – निगीर्णवान् । स मरुतः पाकभूतः – मरुत्पुत्रीभूतः हनूमान् । अत्र मरुत्पाकभूत इति विशेषणं चिरजीवित्वव्यञ्जकम् । वः धुरि धुरि – पुरः पुरः । विद्योततां – स्फुरतु। हेतूत्प्रेक्षा ॥ २१ ॥

**आरुह्यातीव रक्तो जननगिरिशिखां तोरणस्तम्भचूडा -**
**माशीर्भिस्स्वार्घ्यतोयैः क्षितिदुहितृकराम्भोजविन्यासपूतैः।**

---

१. सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥ (चन्द्रालोकः श्लो० २७)

**पौनःपुन्येन निर्वापितनिशिचरणच्छिद्रतो भद्रमूर्ति –**
**र्नाकौकश्चक्रबन्धुर्नभसि विजयते भानुमान् श्रीहनूमान्**
**॥ २२ ॥**

आरुह्येति । अतीवरक्तस्सन् । तोरणस्तम्भचूडां – तोरणस्तम्भशिरो-भागम् । जननगिरिशिखाम् – उदयाचलशृङ्गम् आरुह्य । आशीर्भिः – आशीर्वादरूपैः । क्षितिदुहितृकराम्भोजविन्यासपूतैः – सीताकरा-रविन्दपरिशुद्धैः । स्वार्घ्यतोयैः – सुष्टु अर्घ्यजलैः पौनः पुन्येन – पुनः पुनः – **चातुर्वर्ण्यादिकत्वात् स्वार्थे ष्यङ्** प्रत्ययः – मुहुर्मुहुरित्यर्थः। निर्वापितनिशिचरणच्छिद्रतो । तादृशैरर्घ्यजलैः साधनैः निवृत्तनिशि-चरोपद्रवाद्भद्रमूर्तिः – निपुणशरीरः । नाकौकसो देवाः, त एव चक्राश्चक्रवाकाः, तेषां बन्धुः – **कोकश्चक्रश्चक्रवाक** इत्यमरः । हनूमानेव भानुमान् सूर्यः । नभसि आकाशभागे । श्रीमान् सन् विजयते – विजयश्रीयुक्तस्सन् सर्वोत्कर्षेण वर्तत इत्यर्थः । [1]सावयवरूपकालङ्कारः ॥ २२ ॥

**पङ्क्तिः क्षोणीधराणां कपिभिरतिबलैस्तूर्णमानीयमाना**
**क्षिप्ता पाथोधिगर्भे लघुसरणितया नो ममज्जेत्यचित्रम् ।**
**व्यालीने वस्तुमात्रे पवनसुतयशोदुग्धसारैरपारै –**
**र्नो विद्मः क्वेति सेतुः कथमिति रचितो विश्वकर्मात्मजेन**
**॥ २३ ॥**

---

१. आरोपविषयस्य स्यादतिरोहितरूपिणः ।
उपरञ्जकमारोप्यमाणं तद्रूपकं मतम् ॥
यत्रावयवानामवयनविनश्च सामस्त्येन निरूपणं निबध्यते तत् समस्तवस्तुविषयं रूपकम् ॥ (प्रतापरुद्रीये अर्थालङ्कारप्रकरणे)

**पङ्क्तिरिति।** अतिबलैर्महासत्त्वैः कपिभिः तूर्णमानीयमाना – आह्रियमाणा। पाथोधिगर्भे – समुद्रजठरे । क्षिप्ता – निहिता । क्षोणीधराणां – शैलानाम् । पङ्क्तिः – श्रेणिः । लघुसरणितया – लघिमा । नो ममज्ज – अन्तर्न विवेशेत्यर्थः । इत्यचित्रम् – नाश्चर्यम् । अपारैः – पवनसुतयशो–दुग्धसारैः – हनूमत्कीर्तिमयैर्दुग्धसारैः – क्षीरसारैः वस्तुमात्रे व्यालीने – अभिभूते सति विश्वकर्मात्मजेन नळेन । सेतुः क्वेति रचितः कथं रचित इति नो विद्मः – न जानीमः । लवणसमुद्रस्यापि कीर्त्या अभिभूतत्वात् विशिष्य धर्मिज्ञानाभावेन कथं सेतुनिर्माणमिति भावः । अतिशयोक्त्यलङ्कारः ॥ २३ ॥

**मेरुं मन्थाचलं वा तुहिनशिखरिणं चक्रवालं च विन्ध्यं**
**पिण्डीकर्तुं कराभ्यां पटुरहमिति च ज्ञापयन्नात्मशक्तिम्।**
**हस्तावासज्य मौलौ निवसति निभृतं यः पुरो राघवेन्दो–**
**रिन्धानामिन्दिरां स प्रतिपदमनघामाञ्जनेयः प्रदेयात् ॥**
**॥ २४ ॥**

**मेरुमिति।** मेरुं – मेरुपर्वतम् । मन्थाचलं वा । तुहिनशिखरिणं – हिमाद्रिम् । चक्रवालम् – विन्ध्यं च कराभ्यां – साधनाभ्यां । पिण्डीकर्तुं – चूर्णीकर्तुम् अहं पटुरिति – अहमेव समर्थ इति । आत्मशक्तिं – स्वसामर्थ्यं । ज्ञापयन्निव – दर्शयन्निव । मौलौ । हस्तावासज्य – घटयित्वा । राघवेन्दोः – रामचन्द्रस्य । पुरः – अग्रे । निभृतं – निश्चलम्। निवसति – आस्ते । स आञ्जनेयः इन्धानां – द्योतमानाम्। अनघां – निर्दुष्टाम् । इन्दिरां – लक्ष्मीम् । प्रतिपदं – पदे पदे । प्रदेयात् – दद्यादिति सम्बन्धः । उत्प्रेक्षालङ्कारः ॥ २४ ॥

**प्रालेयाहार्यभागस्थितकदळवनीनित्यवास्तव्ययोगात्**
**प्रश्लिष्यद्वीरलक्ष्मीस्तनकनकघटीसक्तकान्तिप्ररोहात् ।**

**लङ्कापुर्याः प्रतोळीविहृतिषु रजनीसङ्गमादङ्गसङ्गं**
**पीतं यस्यैव भूयस्स दिशतु कुशलं रामदूताग्रणीर्वः ॥**
**॥ २५ ॥**

**प्रालेय इति ।** प्रालेयाहार्यो – हिमाचलः । तस्य भागे – प्रदेशे । स्थिता या कदळीवनी काञ्चनकदळीवनं, तस्यां नित्यवास्तव्ययोगात् – नित्यस्थित्या – हेतुना । **भजे हेमरम्भावळीनित्यवासमिति** श्रीमद्भगवत्पादोक्तेः । प्रश्लिष्यन्ती या वीरलक्ष्मीः – वीरश्रीः । तस्यास्स्तनकनकघटीस्तनावेव कनककलशौ । ताभ्यां सक्तः – प्रसक्तः कान्तिप्ररोहः तस्माद्धेतोरिवेत्यर्थः । अत्र स्तनकनककलशयोः वीरलक्ष्मीसम्बन्धवर्णनमत्यन्तसन्ततत्वद्योतनाय । लक्ष्म्याः – पीतत्वस्य जगत्प्रसिद्धत्वात् । लङ्कापुर्याः प्रतोळीविहृतिषु – लङ्कावीथीसञ्चारेषु । रजनिसङ्गमाद्धरिद्रा सम्बान्धादिवेत्यर्थः । हरिद्रारजनीनिशेति शब्दार्णवे । यस्याङ्गमङ्गं – प्रत्यङ्गं पीतं सञ्जातपीतवर्णमभूत् । स रामदूताग्रणीः वः कुशलं दिशतु – दद्यादित्यर्थः । हेतूत्प्रेक्षालङ्कारः ॥ २५ ॥

**अभ्यर्णे स्त्रीनिषण्णे सुगुणयुजिमणौ नैव दाहाग्निना स्यात्**
**दृष्टं तच्चित्रभानोश्शिशुभिरपचितैर्वालधौ वर्धितस्य ।**
**आस्ये कृत्वैव चूडामणिमतिमहसं मारुतेर्वर्धितस्य**
**क्व स्याद्दाहप्रसक्तिर्वसतिविघटके कार्यमात्रस्य कार्यम्**
**॥ २६ ॥**

**अभ्यर्ण इति ।** सुगुणयुजि – निर्दोषे । मणौ –अभ्यर्णे सन्निषण्णे – समीपे निवसति सति । अग्निना दहेन्नैव स्यात् । मणेर्दाहप्रतिबन्धकत्वात् इति भावः । इदं च लोके दृष्टम् । वालधौ वाले । वर्धितस्य – वृद्धिं गतस्य चित्रभानोः । वह्नेरुपचितैर्वर्धिष्णुभिश्शिशुभिः – स्वल्पप्रायैरतिमहसम् – अत्यन्ततेजस्कम् । चूडामणिम् – अमोघं मणिम् । आस्ये

कृत्वा – गल्लविवरे धृत्वा । एधितस्य – वर्धमानस्य । मारुतेर्हनूमतः। दाहप्रसक्तिः क्व स्यात्? तथा हि – कार्यमात्रस्य विघटके प्रकृतकार्यता–वच्छेदकावच्छिन्नप्रतिबन्धके वसति सति कार्यं क्व स्यात्? अन्यथा केवलं सिद्धिकालेऽपि अनुमितिः स्यादिति तार्किकसमयविलोपो भवेदिति भावः । शास्त्रीयस्वभावोक्त्यलङ्कारः ॥ २६ ॥

**काकुत्स्थस्तोत्रवारीविहृतिषु रसिकरसोन्मदस्तत्प्रभक्त्या**
**निस्तन्द्रोद्वृत्तहेलाविघटितविपुलोदारलङ्कातटाकः ।**
**गाढाहङ्काररक्षस्समुदयकदळोत्पाटनोत्कण्ठिताशः**
**साशं कीशेशगन्धद्विपकुलतिलकः सम्पदे द्योततां वः ॥**
**॥ २७ ॥**

**काकुत्स्थेति** । काकुत्स्थस्य – रघूद्वहस्य । स्तोत्रवारी – स्तुतिमस्तुतिमयं – राजचिह्नं स्थानं । वारी स्याद्गजबन्धनम् इत्यमरः । रसज्ञः – तत्प्रभक्त्या तस्मिन् राघवे अधिकभक्त्या । सोन्मदः – अधिकमदः । **भक्त्येत्यभेदे** तृतीया धान्येन धनवानितिवत् । निस्तन्द्रा – जागरूका । उद्वृत्ता हेला – उद्दामदर्पः । तेन विघटित उदारलङ्कातटाकः येन स तथोक्तः । गाढाहङ्कारः – कठिनाहङ्कारः । तादृशो यो रक्षस्समुदयः – राक्षससमुदायः । स एव कदळानि । तदुत्पाटने – तदुन्मूलने उत्कण्ठिताशः – उद्ग्रीवेच्छः । कीशेशगन्धद्विपकुलतिलकः – हनूमान् । तद्रूपो गन्धगजराजो वः । सम्पदे साशं सस्पृहम् । द्योततां – सम्पदे भूयादित्यर्थः । सावयवरूपकालङ्कारः ॥ २७ ॥

**आसत्यासत्यमुच्चैरतिनिबिडतया वर्धमाने शरीरे**
**सौमित्रिं शक्रजेतुः समिति लघुतया गाढमुद्धृत्य चांसे ।**

**स्थाने स्वस्येति वेधः पदपरिवृढतां यस्समीक्ष्येव वव्रे**
**निर्वृत्त्यै नित्यजीवी बहुळयतु स वो वाञ्छितं वायुसूनुः ॥**
**॥ २८ ॥**

**आसत्येति** । शक्रजेतुः – इन्द्रजितः । समिति – युद्धे । **समित्याजि-समित्युद्ध इत्यमरः** । लघुतया – लाघवेन । अंसे सौमित्रिम् उद्धृत्य – धृत्वा । अतिनिबिडतया – अतिस्थौल्येन । शरीरे – वर्धमाने सति । आसत्यं – सत्यलोकपर्यन्तम् । आसत्या प्रत्यासत्या – साधनेन । वेधः पदपरिवृढतां – ब्रह्मलोकप्रभुत्वम् । समीक्ष्येव – सम्यग्दृष्ट्वेव। स्वस्य स्थाने योग्यमिति वव्रे – अकामयत । लोके स्वेन सम्यग्दृष्टमेव फलं स्वार्थं समीहत इति भावः । सः [१]नित्यजीवी वः । निवृत्त्यै – सुखाय । वाञ्छितमभिलषितं बहुलयतु – बहूकुर्यादिति सम्बन्धः । गम्यो हेतूत्प्रेक्षालङ्कारः ॥ २८ ॥

**वालव्याघातशीर्यज्जठरघनघटागर्भतो निष्पतन्ती**
**संसत्सौदामिनीनां रणभुवि चरतः सत्वरं यस्य पार्श्वे ।**
**वीरश्रीरात्तमूर्तिस्सपदि परिणयोत्कण्ठितेव प्ररेजे**
**कः स्यात्तस्य स्तुतीनां पटुरनिलभुवः खेचरो भूचरो वा**
**॥ २९ ॥**

**वालव्याघातेति** । वालव्याघातेन – पुच्छताडनेन । शीर्यतां जरठघनानां – घटानां समूहानां । गर्भतः – मध्यप्रदेशात् । निष्पतन्ती – पतिष्णुः । सौदामिनीनां – विद्युतां । संसत् – समूहः । सत्वरं । रणभुवि । चरतः – यस्य हनूमतः पार्श्वे – पार्श्वयोरात्तमूर्तिः सती प्राप्तविग्रहो सपदि

---

१. अश्वत्थामो बली व्यासो हनूमांश्च विभीषणः ।
कृपः परशुरामश्च सप्तैते चिरजीविनः ॥ इति आर्षश्लोकोऽत्र स्मरणीयः।

परिणयोत्कण्ठिता – पाणिग्रहोत्सुका वीरश्रीरिव । प्ररेजे – प्रबभासे । तस्यानिलभुवः – वायुसूनोः स्तुतीनां विषये खेचरो भूचरो वा कः पटुः स्यात्? को वा क्षम इत्यर्थः । अतिशयोक्तिगर्भोत्प्रेक्षा ॥ २९ ॥

**अत्यर्थोधूढपुच्छाश्चलघटितमरुन्मित्रमावर्तयन् खे**
**भूयो जाज्वल्यमानं मुहुरपि च परिप्लोषणीया तु पुर्याः ।**
**दिक्चक्रे चक्रबन्धुं स्वगुरुरिति परिभ्रामयन् रक्तघृष्टिं**
**ख्यातः ख्यात्यै स भूयात् खरकिरणोत्तंसदासप्रभुर्वः ॥**
**॥ ३० ॥**

**अत्यर्थेति** । अत्यर्थमुधूढेन – उत्क्षिपेन पुच्छाञ्चलेन । घटितं मरुन्मित्रं – मरुत्सखमग्निम् । लोहिताश्वो वायुसख इत्यमरः । भूयो जाज्वल्यमानं – भूयिष्ठं – ज्वलन्तम् । खे – आकाशे स्थिरस्सन्निति शेषः । रक्तघृष्टिं – रक्तकान्तिं । चक्रबन्धुं – सूर्यं स्वगुरुरिति परिभ्रामयन्निव आवर्तयन् – भ्रामयन् । यातुपुर्याः परिष्लोषणे लङ्कादहनसमये ख्यातः खरकिरण–कुलोत्तंसदासप्रभुः – रामदासश्रेष्ठस्य हनूमान् वः ख्यात्यै भूयात् – भवत्विति सम्बन्धः । गम्योत्प्रेक्षालङ्कारः ॥ ३० ॥

**आक्रम्याक्रम्य लोकानुपरि रघुपतेर्दोःप्रतापो समन्तात्**
**गत्वा दूरं कियद्वा खररुचिरधुना विक्रमस्तस्य च क्व ।**
**इत्येवं द्रष्टुमुच्चैर्वियति बहुतरां वृद्धिमाजौ प्रपेदे**
**यस्सोऽयं सर्वदा वः स्ववशयतु मुहुर्भूयसः पूरुषार्थान्**
**॥ ३१ ॥**

**आक्रम्येति** । रघुपतेः – रामस्य । दोःप्रतापः – भुजप्रतापः । स एव खररुचिः – सूर्यः । उपरि लोकान् आक्रम्याक्रम्य – क्रान्त्वा क्रान्त्वा । कियद्वा दूरं – तस्य विक्रमः क्वेति गत्वा द्रष्टुमिव । आजौ – युद्धे ।

वियति – आकाशे । बहुतरामधिकां – वृद्धिं यः प्रपेदे – प्राप । सोऽयं हनूमान् भूयसः बहून् । उच्चैः – उत्कृष्टान् – पुरुषार्थान् । मुहुः – सर्वदा । स्ववशयतु – स्वाधीनान् करोत्विति योजना । गम्योत्प्रेक्षालङ्कारः ॥ ३१ ॥

अत्युग्रोदग्रमूर्तेर्ज्वलदनलशिखासञ्चयोद्रक्तदृष्टेः
निष्कम्पस्थापिताङ्घ्रेर्विपुलतरदृषद्दण्डनिर्व्यूढमुष्टेः ।
रौद्रस्फाराट्टहासस्थपुटितनभसः संयुगे वायुसूनोः
कः शक्तश्शस्त्रपाणिस्त्रिजगति पुरतः स्थातुमुद्वीक्षितुं वा ॥
॥ ३२ ॥

अत्युग्रेति । अत्युग्रा – अतिक्रूरा । उदग्रा – अत्युन्नता मूर्तिर्यस्य तस्य। ज्वलत्यः अनलशिखाः तासां सञ्चय इव – समूह इव । उद्रक्ता दृष्टिर्यस्य । स तथोक्तः रौद्रः – भयङ्करः – स्फाराट्टहासः – निर्भर–सिंहनादः । तेन स्थपुटितं – स्थगितं नभो यस्य तस्य । वायुसूनोः – हनूमतः । सङ्गरे – युद्धे । त्रिजगति जगत्त्रये । शस्त्रास्त्रपाणिः कः – को वा ? पुरतः स्थातुं । अन्ततः उद्वीक्षितुं वा शक्तः – समर्थः ? न कोऽपि समर्थ इति भावः । [1]स्वभावोक्त्यलङ्कारः ॥ ३२ ॥

न्यञ्चन्माहेन्द्रभूमीधरशिखरतटोल्लङ्घने तूर्णमब्धे –
र्वेगादुत्खातशाखिव्रततिरविरतं पृष्ठतो सुव्रजन्ती ।
आयान्ती भाविरक्षस्समुदयदळने मारुते राघवार्थे
प्रत्यायातस्य साहाय्यकमुचितमिव स्वायुधत्वेन कर्तुम्
॥ ३३ ॥

---

१. स्वभावोक्तिस्स्वभावस्य जात्यादिस्थस्य वर्णनम् ।
कुरङ्गैरुत्तरङ्गाक्षैः स्तब्धकर्णैरुदीक्षितम् ॥ (चन्द्रालोकः श्लो० १५९)

न्यञ्चदिति । न्यञ्चदधोनिमग्नः माहेन्द्रभूमीधरः – महेन्द्राचलः । तस्य शिखरतलात् – अग्रभागात् । अब्धेस्समुद्रस्य लङ्घने – अतिक्रमणे प्रत्यायातस्य – मारुतेः वेगादुत्प्लवनतया । तूर्णम् – अविरतम् । अनवच्छिन्नं – निरवकाशमित्यर्थः । पृष्ठतः – पश्चात् । अनुव्रजन्ती – अनुसरन्ती। भाविरक्षस्समुदयदळने । राघवार्थे स्वायुधत्वेन – आयुधविशेषत्वेन । उचितं साहाय्यं – सहायकर्म । कर्तुमायान्तीव उत्खातशाखिव्रततिः – उन्मूलिता वृक्षपङ्क्तिः । शुशुभे इति शेषः । हेतूत्प्रेक्षा ॥ ३३ ॥

**तीर्त्वा गोष्पादवद्द्रागलवणजलनिधेः पारमेकप्रहेळया**
**कृत्यं नाघोषि भूयस्तरमनिलभुवा राघवेन्दोस्तदेतत् ।**
**नाम स्वं भक्तिभावात्कथमपि कथयन् कश्चिदेव क्षणार्धात्**
**आपत्सिन्धूनपारानपि जगति तरेत् किं मयेति प्रियेव ॥**
**॥ ३४ ॥**

तीर्त्वेति । लवणजलनिधेः – लवणसमुद्रस्य । पारं – पश्चात्तटम् । एकप्रहेळया – एकप्रयत्नेन । गोष्पदवत् – गोष्पदमिव । तीर्त्वा – उल्लङ्घ्य । अनिलभुवा – हनूमता । स्वं – स्वीयं । नाम – हनूमच्छ–ब्दम् । भक्तिभावात् – अतिशयभक्त्या कथयन् – पठन् । क्षणार्धात् – अर्धक्षणेन। कश्चिदेव – यः कश्चन । अपारान् – पाररहितान् । आपत्सिन्धून् – आपत्समुद्रान् अपि । तरेत् मया किमिति प्रियेव भयस्तरं तदेतत्कृत्यं – समुद्रलङ्घनरूपं कर्म । राघवेन्दोः – रामचन्द्रस्य । विषये नाघोषि – नोक्तम् । कर्मणि लुङ् । स्वभावोक्त्यलङ्कारः ॥ ३४ ॥

**आस्थाय स्वर्णभूभृच्छिखरमिव हरेर्वेष्टितां वालपीठी -**
**मुत्कण्ठोद्रेककण्ठप्रतिपदकथितप्रह्वरामाह्वयस्य ।**

**साटोपोन्मुक्तगर्जद्बधिरितककुभः कुप्यतो वायुसूनोः**
**क्वाग्रे वर्तेत वन्यस्तरुण इव घृणो रावणश्रवणोत्थः ॥**
**॥ ३५ ॥**

आस्थायेति । स्वर्णभूभृच्छिखरं – सुमेरुशृङ्गं । हरेः – सूर्यस्येव । वेष्टितां – वलयीकृतां वालपीठीम् आस्थाय – अध्यास्य । उत्कण्ठोद्रेकेन – उत्साहातिशयेन । प्रतिपदकथितम् – अनुक्षणं कीर्तितम् । प्रह्वरामाह्वयस्य – पूज्यरामाभिधानस्य । साटोपं – ससंरम्भम् । उन्मुक्तेन – गर्जेन शब्देन बधिरितककुभः – बधिरीकृतदिशः कुप्यतः – कोपं कुर्वतः । वायुसूनोः पुरतः । रावणः । श्रावणोत्थः – वर्षाकालोत्पन्नः वन्यस्तरुणो घुण इव – सद्यस्तनः कीट इव क्व वर्तेत ? – क्व निवसेत् ? अतिशयोक्तिस्स्वभावोक्तिर्वा अलङ्कारः ॥ ३५ ॥

**दग्धुं लङ्कां गृहीत्वा जलनिधिजठरात् बाडबं बाढशक्तिं**
**भूयस्तस्मै प्रयच्छन्निव निजविपुलात्युच्चपुच्छावलग्नम् ।**
**ज्वालाव्याप्तान्तराळं ज्वलनमतिजवान्मज्जयामास योऽब्धौ**
**सश्रीविश्रान्तिभूमिस्स्ववशयतु मुहुस्सम्पदं पावनिर्वः ॥**
**॥ ३६ ॥**

दग्धुमिति । लङ्कां दग्धुं जलनिधिजठरात् – समुद्रगर्भात् । बाढशक्तिं बाडबं – बडबानलम् । **बाडबो बडबानल** इत्यमरः । गृहीत्वा – आदाय। भूयस्तस्मै – जलधये । प्रयच्छन्निव – समर्पयन्निव । निजः – स्वीयः। विपुलः – स्थूलः । अत्युच्चः – अत्यायतः । पुच्छः – वालः। तस्मिन्निव लग्नं – सक्तम् । ज्वालाव्याप्तान्तराळमन्तराळप्रसृतज्वालं – ज्वलनमग्निम् । अतिजवादब्धौ यः निमज्जयामास – निक्षिप्तवान् । श्रीविश्रान्तिभूमिः – श्रियः वीरलक्ष्म्याः – विश्रान्तिभूमिः –

पर्याप्ताधिकरणम् । [1]पावनिस्स हनूमान् वः सम्पदं स्ववशयतु – घटयतु इति सम्बन्धः । उत्प्रेक्षालङ्कारः ॥ ३६ ॥

**हस्ताम्भोजादवन्यादुहितुरतिमुदा निर्गमे यातुपुर्या –**
**श्चूडामाणिक्यमग्र्यं द्युमणिमिव पुनः स्वः कपोले निधाय ।**
**दंष्ट्राकूराभिधानस्फटिकमयशिलाघर्षणस्निग्धवर्णं**
**योऽदाद्रामाय हन्याद्विपदमनुपदं गन्धवाहात्मजो वः ॥**
**॥ ३७ ॥**

हस्ताम्भोजादिति । अवन्या दुहितुः – सीतायाः । हस्ताम्भोजात् – करकमलादिति । मुदा – अत्यन्तहर्षेण । यातुपुर्या – लङ्काया निर्गमे – पुनर्निवर्तनसमये । अग्र्यं – श्रेष्ठं चूडामाणिक्यं – शिरोरत्नमादायेति शेषः। द्युमणिमिव – सूर्यमिव । स्वः कपोले – स्वकीयकपोलगर्भे । निधाय क्षिप्त्वा । दंष्ट्राङ्कुराभिधानेन – दंष्ट्राङ्कुराख्यया स्फटिकमयशिलया – सीर्णेजनोपलेन घर्षणतः । स्निग्धवर्णं – सञ्जातस्निग्धभासं कृत्वेति शेषः । यो रामाय अदात् – अददादित्यर्थः । स गन्धवाहात्मजः – हनूमान् वः विपदमनुपदं हन्यात् – निवारयत्विति सम्बन्धः । स्वभावोक्त्यलङ्कारः । गम्योत्प्रेक्षालङ्कारश्च ॥ ३७ ॥

**अत्यूर्ध्वं वर्धमाने वपुषि सरभसं संयुगे शक्रजेतुः**
**हन्ता यस्स्वामिनं मे झडिति कबळयेत् अर्कबिम्बं यथेन्दुम् ।**
**इत्यालोच्यैव तारावळिरतिविजयात् प्रीतिमाधातुकामा**
**मध्ये यस्य व्यलासीन्मनसि विहरतात् सर्वदा मारुतिर्वः ॥**
**॥ ३८ ॥**

---

१. पवनः – वायुः । तस्य अपत्यं पुमान् पावनिः – हनूमान् । अत इञ् इति इञ् प्रत्ययः । (४–१–९४ अष्टाध्यायीसूत्रम्)

**अत्यूर्ध्वमिति** । शक्रजेतुस्संयुगे – युद्धे । सरभसमतिवेगं वपुषि वर्धमाने – एधमाने सति । हन्ता अयं हनूमान् यथा येन प्रकारेण अर्कबिम्बं कबळितवान् तथैवेत्यर्थः । मे – जात्येकवचनम् । स्वामिनं – प्राणकान्तम् । इन्दुं – चन्द्रं । कबळयेत् – भक्षयेत् इति । इत्थमालोच्य – विचिन्त्य । तारावलिः – नक्षत्रपङ्क्तिः । अतिविनयात् – महत्वादिति भावः । विनयातिशयात् प्रीतिं मुदं – **मुत्प्रीतिः प्रमदो हर्ष** इत्यमरः । आदातुकामेव – कर्तुमिच्छुरिव यस्य हनूमतः मध्ये नितम्बप्रदेश व्यलासीत् चकाशे लसतेर्लुङ् । स मारुतिः वः मनसि सर्वदा – अजस्रम् । विहरतात् – क्रीडतु इति सम्बन्धः । अत्र हनूमच्छरीरवृद्धेरिन्दु–कबळनहेतुत्वस्फुरणेन [१]असिद्धविषयहेतूत्प्रेक्षालङ्कारः ॥ ३८ ॥

**मातुः पृथ्वीसुतायाः पदकमलपुरोवृत्तिलोपात्प्ररूढो**
**गाढं मुक्त्वैव लङ्कां लघुधुरि वसतो दत्तचूडामणेर्द्राक् ।**
**सन्तापो निर्गतोऽभून्मुहुरपि करामर्शनाद्राघवेन्दो –**
**र्यस्य श्रीमान् हनूमान् स भवतु भवतामान्तरक्लेशशान्त्यै**
**॥ ३९ ॥**

**मातुरिति** । मातुः – प्रपञ्चजनन्याः पृथ्वीसुताया भूमिपुत्रीत्वेन प्रसिद्धायाः सीतायाः पदकमलपुरोवृत्तिलोपात् – पदारविन्दाग्रभाग–स्थितिराहित्यात् प्ररूढः – समुत्पन्नः – गाढं सन्तापः – लोके पुत्राणां जननीसान्निध्याभावस्य क्लेशजनकत्वादिति भावः । लघु शीघ्रं लङ्कां मुक्त्वैव – विसृज्यैव द्राक् – झटिति । **द्राङ्मङ्क्षु सपदि द्रुतमित्यमरः**। दत्तचूडामणेः – अर्पितशिरोरत्नस्य धुरि पुरः वसतः स्थितस्य यस्य

---

१. सम्भावना स्यादुत्प्रेक्षा वस्तुहेतुफलात्मना ।
उक्तानुक्तास्पदाद्यात्र सिद्धासिद्धास्पदे परे ॥ (चन्द्रालोकः श्लो० १२)

राघवेन्दोः रामचन्द्रस्य मुहुरपि पुनः करामर्शनादुत्कण्ठापूर्वकपाणिस्पर्शनात् निर्गतः विमुक्तः अभूत् – बभूव । श्रीमान् – षड्गुणैश्वर्यसम्पन्नः स हनूमान् भवतां युष्माकम् आन्तरक्लेशशान्त्यै – अन्तर्दुःखनिवृत्तये भवत्वित्यन्वयः । स्वभावोक्तिः [१]प्रहर्षणालङ्कारश्च ॥ ३९ ॥

**छायामायाग्रहेशः प्रमदवनरमापन्नगीपन्नगारिः**
**लङ्काहारिद्रमुद्राविघटनसरणावातपः प्रौढभानोः ।**
**रक्षस्स्त्रीमेघवायुर्दशवदनयशश्शास्त्रमात्रप्रदोषः**
**पुष्णातु श्रीसमृद्धिं प्रतिकलमपि वो मारुतिः पुण्यभूमा**
**॥ ४० ॥**

**छायेति** । छायेव माया (छायाग्रहः) । तस्याः ग्रहेशः सूर्यः । छायाग्रहनिवारक इत्यर्थः । सूर्योदये माया अप्रसरणादिति भावः । प्रमदवनरमा – अशोकवनलक्ष्मीः । सैव पन्नगी – स्त्रीसर्पः पुंयोगादाख्यायाम् इति ङीप् । तस्याः पन्नगारिः – गरुत्मान् अशोकवनभञ्जक इति यावत् । लङ्कायाः हारिद्रमुद्राविघटने – माङ्गल्यविघटनमार्गे प्रौढभानोरातपः – सूर्यातपस्य हरिद्रानिवारकत्वादिति भावः । रक्षस्स्त्रिय एव मेघाः । तेषां वायुः । तदुच्चाटकः सीताहिंसाकर्तृराक्षसीभयङ्कर इत्यर्थः । दशवदनस्य – रावणस्य यशः शास्त्रं – तस्य प्रदोषः – यशसः प्रतिपक्षी–

---

१. उत्कण्ठितार्थसंसिद्धिः विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै विसृष्टा सैव दूतिका ॥
वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः ॥
यत्नादुपायसिद्ध्यर्थात् साक्षाल्लाभः फलस्य च ।
निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥
(चन्द्रालोकः श्लो० १२६–१२८)

त्यर्थः । पुण्यभूमा – पुण्यातिशयः वायोरिति शेषः । सः मारुतिः वः श्रीसमृद्धिं – सम्पदभिवृद्धिं प्रतिकलमपि प्रतिक्षणमपि पुष्णातु – जनयत्विति योजना । [1]पर्यायोक्त्यलङ्कारः । पर्यायोक्तिरलङ्कारो वचो भङ्ग्यन्तराश्रयम् इति लक्षणम् ॥ ४० ॥

**सीता शैलेन्द्रपुत्री सितकिरणकलाशेखरो रामभद्रः**
**सेनानीभेशवक्त्रावपि च कुशलवौ लोकविख्यातशौर्यौ ।**
**कैलासस्सात्वयोध्या पवनवटुरतिप्रौढसत्वस्स तण्डुः**
**द्वैतीयीकः पुरारेस्त्रिजगदुपकृतौ भाति संस्थानभेदः ॥**
**॥ ४१ ॥**

सीतेति । सीता शैलेन्द्रपुत्री – हिमाद्रिसुता । स प्रशस्तः सितकिरणकलाशेखरः – चन्द्रकलावतंसः – रामभद्रः । सेनानीभेशवक्त्रौ – षडास्यो गजास्यलोकविख्यातशौर्यौ – जगत्प्रसिद्धपराक्रमौ – कुशलवौ रामपुत्रौ । कैलास एव – सा प्रसिद्धा अयोध्या । प्रौढसत्त्वः – पवनवटुः – हनूमान् स तण्डुरेव । भृङ्गी भृङ्गरिटस्तण्डुनन्दिनौ नन्दिकेश्वरे इत्यमरः। द्वैतीयीकः – द्वितीयः पुरारेः – शिवस्य जगदुपकृतौ। त्रिलोकोपकाराय संस्थानभेदः – प्रस्थानविशेषः भाति – चकास्तीति सम्बन्धः । [2]रूपकालङ्कारः ॥ ४१ ॥

---

१. पर्यायोक्तिरलङ्कार एव पर्यायोक्तालङ्कार इति कथ्यते । तल्लक्षणं यथा –
कारणं गम्यते यत्र प्रस्तुतात् कार्यवर्णनात् ।
प्रस्तुतत्वेन सम्बद्धं तत्पर्यायोक्तमुच्यते ॥
(प्रतापरुद्रीये अर्थालङ्कारप्रकरणे)

२. विषय्यभेदताद्रूप्यरञ्जनं विषयस्य यत् ।
रूपकं तत् त्रिधाधिक्यन्यूनत्वानुभयोक्तिभिः ॥ (चन्द्रालोकः श्लो० १२)

चञ्चच्चण्डाट्टहासप्रतिभयदकराळास्यरक्षःपिशाच -
व्याक्रन्दस्वस्तिपाठप्रवचनपटुभिर्भूतभेताळसङ्घैः ।
सङ्कृत्तैर्भद्रकाळीमधिगतपिशितैः प्रीणयन् वीरलक्ष्मीं
दृष्टस्संहाररुद्रप्रभव इव मरुन्नन्दनो वः पुनातु ॥ ४२ ॥

चञ्चदिति । चञ्चच्चण्डाट्टहासैः – जागृतोद्दण्डसिंहनादैः प्रतिभयदाः – भयङ्कराः भयङ्करप्रतिभयमित्यमरः । कराळास्याः – विकृतवदनाः रक्षः पिशाचाः – राक्षसपिशाचाः । तेषां व्याक्रन्द एव स्वस्तिपाठः तस्य प्रवचनं तस्मिन् पटुभिः – समर्थैः भूतभेताळसङ्घैः – भूतभेताळवर्गैः सङ्कृत्तैश्छिन्नैः अधिगतपिशितैः वीरलक्ष्मीं तामेव भद्रकाळीं प्रीणयन् – प्रहर्षयन् दृष्टो धीरः संहाररुद्रप्रभव इव – वीरभद्र इव स्थितः मरुन्नन्दनः – हनूमान् वः पुनातु – रक्षत्विति योजना । [1]अत्रोपमालङ्कारः भीभत्सरसाङ्गको रौद्ररसोऽभिव्यञ्जकश्च ॥ ४२ ॥

स्वामी चेद्रामभद्रो भवनभुवनराट् तस्य दासो हनूमान्
सर्वं स्थाने तदेतत्तदनु रविवटोर्मारुतेर्दूतभावः ।
बाणद्वारासिकावद्भवति भगवतः प्रीतिभावात्पुरारेः
कस्मादेवास्तु शश्वज्जगति रुचिपदं नैव चिन्तास्पदं तत्
॥ ४३ ॥

स्वामी चेदिति । भवनभुवनराट् – जगत्प्रभुः रामभद्रः राघवश्चेदिति निर्धारणायां स्वामी प्रभुर्भवतु । हनूमान् तस्य दासो भवत्वित्यर्थः । तदेतत्सर्वं स्थाने युक्तम् । रामहनूमतोः स्वस्वामिभावस्य अनुगुणत्वादिति भावः । रविवटोस्सुग्रीवस्य निरूपितत्वं षष्ठ्यर्थः । मारुतेः – हनूमतः

---

१. उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोः ।
हंसीव कृष्ण ते कीर्तिस्स्वर्गङ्गामवगाहते ॥ (चन्द्रालोकः श्लो० १)

निष्ठत्वं षष्ठ्यर्थः । भगवतः पुरारेः प्रीतिभावात् भक्तानुग्रहो बाणद्वारासिकावत् – बाणासुरद्वारस्थितवत् । तस्मादनेनापि हेतुना जगति रुचिपदं भवति । तच्चिन्तास्पदं नैव तत्र चिन्ता कर्तव्येत्यर्थः । अतिशयोक्त्यलङ्कारः ॥ ४३ ॥

**भल्लूकेशो निराशो गलितहृदि नले मित्रपुत्रे विरक्ते**
**नीले निर्मग्नलीले निरवधिकबलेऽप्यङ्गदे भङ्गभाजि ।**
**निष्पन्दे राघवेन्द्रावहमिति कथयन् यो ललङ्घेऽम्बुराशिं**
**कीशेशस्सोऽस्तु भूत्यै किसलयितपरानन्दथुस्सन्ततं वः**
**॥ ४४ ॥**

भल्लूकेश इति । भल्लूकेशो – जाम्बवति निराशे – निःस्पृहे । सर्वत्र असामर्थ्यादिति शेषः । नले – नलनामनि कपिवरे गलितहृदि – स्रस्तमनसि सति । मित्रपुत्रे – अङ्गदे विरक्ते सति – निराशे सति नीले निर्मग्नलीले – निरुत्साहे । निरवधिकबले – अपारत्वे । अङ्गदेऽपि भङ्गभाजि – भग्ने सति । राघवेन्द्रौ – रामचन्द्रे निष्पन्दे सति – निश्चले सति । अहमिति कथयन् अम्बुराशिं यः ललङ्घे – ततार । किसलयित– परानन्दथुः – सम्पादितानन्दः स हनूमान् स्यादानन्दथुरानन्द इत्यमरः । सन्ततं भूत्यै ऐश्वर्याय अनवच्छिन्नायेत्यर्थः अस्तु – भवतु । स्वभावातिशयोक्तिरलङ्कारः ॥ ४४ ॥

**विश्वामित्रानुयात्रा लघु तदनु ततस्सर्वविद्यास्त्रलाभः**
**पश्चात्पश्यल्ललाटस्वकरधृतधनुर्दण्डसारे परीक्षा ।**
**पुत्रेणालोक्य वायोर्दशमुखभवने रक्षसीवेष्टिताया**
**वार्तायामाहृतायां पुनरतिसफलं सर्वमुर्वीसुतायाः ॥**
**॥ ४५ ॥**

विश्वामित्रेति । लघु – शीघ्रं विश्वामित्रमनुसृत्य गमनं । तदनु – अनन्तरं सर्वदिव्यास्त्रलाभः – जृम्भकाद्यस्त्रप्राप्तिः । ततः – पश्चात् पश्यल्ललाटं यस्य स तथोक्तः – परमेश्वरः तस्य स्वं – स्वीयं धनुर्दण्डः – तस्य सारे – तद्बले परीक्षा – विचारः । ततः दशमुखभवने राक्षसीवेष्टितायाः – राक्षसस्त्रीपरिवृतायाः । उर्वीसुतायाः – सीतायाः । आलोक्य वायोः पुत्रेण हनूमता वार्तायामाहृतायामेवं सीतार्थं कृतः प्रयत्नः सर्वमतिसफलम् – अत्यन्तफलवद्बभूवेति शेषः । पुनश्शब्दो वाक्यालङ्कारे । [1]वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः ॥ ४५ ॥

**मज्जन्मैनाकपृथ्वीधरचरणशिलामूलनिर्घातनुन्न –**
**व्यानम्रव्याळचूडामणिफणफलकभ्रश्यदूर्ध्वप्रपञ्चः ।**
**अत्युद्यद्बालदण्डप्रविवळितशिखाच्छोटनच्छिन्नमेघः**
**संरम्भो वायुसूनोस्सलिलनिधिसमुल्लङ्घने रक्षताद्वः ॥**
**॥ ४६ ॥**

मज्जदिति । मज्जन्निर्मग्नः – मैनाकपृथ्वीधरः तस्य चरणशिलामूलैः – पादमूलैः निर्घातेन नुन्नेभ्यः – प्रष्ठेभ्यः । व्यानम्रेभ्यः – नम्रीकृतेभ्यः। व्यालचूडामणेः – शेषस्य फणाफलकेभ्यः भ्रश्यद्भ्रष्टः ऊर्ध्वप्रपञ्चः – उपरिप्रपञ्चः यस्य स तथोक्तः । सलिलनिधिसमुल्लङ्घने समुद्रतरणे वायुसूनोः – हनूमतः संरम्भः – प्रयत्नः वः रक्षतात् – पातु इति सम्बन्धः । स्वभावोक्तिरलङ्कारः ॥ ४६ ॥

**सन्त्रस्तोद्धारशौण्डस्समदरिपुचमूजालसंहारचण्डः**
**शीर्यन्नक्षत्रषण्डः शिथिलितनिपतन्माल्यवद्बाहुदण्डः ।**

---

१. हेतोः वाक्यपदार्थत्वे काव्यलिङ्गमुदाहृतम् ।
(प्रतापरुद्रीये अर्थालङ्कारप्रकरणे)

**काकुत्स्थच्छत्रदण्डः कपितिलकयशस्फारवाराशिकाण्डः**
**शश्वद्देयाद्वरं वस्स्वयमनिलवटोर्वाञ्छितं वालदण्डः ॥**
**॥ ४७ ॥**

सन्त्रस्तेति । सन्त्रस्तानां – चकितानाम् उद्धारे – उद्धृतौ शौण्डः – समर्थः । समदाः – मत्ताः रिपवः तेषां चमूः वाहिनी पृतना चमूरित्यमरः। तस्याः जालं – समूहः । तस्य संहारे चण्डः – अत्यन्तकुपितः चण्डस्त्वत्यन्तकोपन इत्यमरः । शीर्यतां नक्षत्राणां समूहो येन स तथोक्तः। शिथिलितः निपतन् माल्यवद्बाहुदण्डः – माल्यवदाख्यराक्षसभुजदण्डो येन स तथोक्तः । काकुत्स्थच्छत्रदण्डः – काकुत्स्थच्छत्रस्य राघवातपत्रस्य दण्डः – आलम्बनदण्ड इव स्थितः । कपितिलकस्य – सुग्रीवस्य यशस्स्फारो वाराशिः – यशस्समुद्रः तस्य काण्डः – सलिलभूत इत्यर्थः। अनिलवटोः – हनूमतो वालदण्डः शश्वत् – पुनः पुनः वाञ्छितम् – अभिलषितं वरं स्वयं – स्वत एव देयात् – दद्यात् इत्यन्वयः । [1]पर्यायोक्तिरलङ्कारः ॥ ४७ ॥

**दग्धुं लङ्कां समन्तान्नभसि विचरतस्सत्वरं वायुसूनोः**
**निष्कम्पोन्नम्रवालाञ्चलभुविरभसाद्वर्धमानस्य वह्नेः ।**
**कीलैः कङ्केळिगुच्छप्रभवरुचिसखैरन्तराकीर्णधूमैः**
**शोणाम्भोजं सभृङ्गं सर इव शुशुभे वर्त्मवैमानिकानाम्**
**॥ ४८ ॥**

दग्धुमिति । लङ्कां – लङ्कापुरीं दग्धुं नभसि अन्तरिक्षे समन्तात् – सर्वत्र सत्वरं विचरतः – चरिष्णोः वायुसूनोः हनूमतः निष्कम्पं –

१. पर्यायोक्तं तु गम्यस्य वचो भङ्ग्यन्तराश्रयम् ।
नमस्तस्मै कृतौ येन मुधा राहुवधूकुचौ ॥ (चन्द्रालोकः अल० २९)

निश्चलम् उन्नम्रवालाञ्चलभुवि – उत्क्षिप्तवालाग्रप्रदेशे रभसाद्वेगात् वर्धमानस्य वह्नेः कङ्केळिगुच्छप्रभवरुचिसखैः – रक्ताशोकमञ्जरीसवर्णैः रक्ताशोकस्तु कङ्केळिरिति यादवः । अन्तराकीर्णधूमैः । शोणाम्भोजं – रक्तपद्ममयं सरः सभृङ्गं सर इव वैमानिकानां वर्त्म शुशुभे – रेजे । उत्प्रेक्षालङ्कारः ॥ ४८ ॥

**लङ्कानाथानुजो वा सरसिजसुहृदः पुत्रको लक्ष्मणो वा**
**कैकेयीनन्दनो वा परिणतमनसामञ्जनापुत्रकान्यः ।**
**रामत्वेन प्रतीतं कथमपि भुवने वस्तुमात्रं च नाम्ना**
**बुद्ध्वा बद्धाञ्जलिस्सन् परवशितमनाः कोऽनु तिष्ठेत् कृतार्थः**
**॥ ४९ ॥**

लङ्केति । लङ्कानाथो – रावणः तदनुजः – विभीषणः सरसिजसुहृत्पुत्रकस्सूर्यतनयः सुग्रीवो वा लक्ष्मणो वा । कैकेयीनन्दनः – भरतो वा। पतिणतमनसां – परिणतचित्तानां मध्ये अञ्जनानन्दनान्यः – हनूमदन्यः। भुवने – लोके कथमपि – केनापि प्रकारेण । नाम्ना रामत्वेन प्रतीतं ज्ञानविषयीकृतं वस्तुमात्रं बुद्ध्वा बद्धाञ्जलिस्सन् – कृताञ्जलिस्सन् परवशितमनाः – पराधीनचित्तः कृतार्थः कोऽनु तिष्ठेत्? को वर्तेतेत्यर्थः ॥ ४९ ॥

**लङ्कामुत्पाट्य वेगादतिविपुलतरां मूलकीकन्दभङ्ग्या**
**हस्ते धृत्वा पयोधेः पयसि सकुतुकं क्षालितायां च तस्याम्।**
**उद्धृत्योद्वीक्ष्य रत्नं शकलमिव रसादङ्गुळीपल्लवाभ्यां**
**सीतां रामाय दातुं भुवि पवनवटुश्शक्नुयादेव साक्षात् ॥**
**॥ ५० ॥**

लङ्कामिति । मूलकीकन्दभङ्ग्या – मूलकीकन्दोत्पाटनरीत्या वेगात्

अतिविपुलतराम् – अतिविस्तृतां लङ्कामुत्पाट्य – उन्मूल्य हस्ते धृत्वा । पयोधेः पयसि – समुद्रजले सकुतुकं – सहर्षं तस्यां लङ्कायां क्षाळितायां सत्यां रत्नं । शकलं – शकलप्रायमिव उद्वीक्ष्य दृष्ट्वा अङ्गुळीपल्लवाभ्यां अङ्गुळीद्वयमुद्रया उद्धृत्य सीतां रामाय दातुं पवनवटुर्हनूमान् साक्षात् पुर एव शक्नुयात् – शक्तो भवेत् इति सम्बन्धः । अतिशयोक्त्यलङ्कारः ॥ ५० ॥

**पुच्छेनायामभाजा त्रिभुवनजयिना सर्वदा सेन्द्रचापः**
**प्रत्यूढप्रौढगर्जारवनिबिडमरुन्मार्गदिक्चक्रकूटः ।**
**अस्तोकस्फारवीरायितरसपयसाभूरिपूर्णप्रपञ्चो**
**जीमूतश्रीहनूमान् कलयतु जगतां जीवनोच्छ्रायमुच्चैः॥**
**॥ ५१ ॥**

पुच्छेनेति । आयामभाजा – दीर्घेण त्रिभुवनजयिना – त्रिलोकजयसाधनेन पुच्छेन – वालेन सर्वदा सेन्द्रचापः – इन्द्रायुधसहितः । पुच्छेनेत्यभेदे तृतीया । प्रत्यूढेन – सञ्जातेन प्रौढगर्जारवेण – कठिनसिंहनादेन निबिडः मरुन्मार्गः दिक्चक्रकूटो येन स तथोक्तः । अस्तोकेन – अधिकेन स्फारेण वीरायितेन वीररसेन पयसा – जलेन भूरि यथा तथा पूर्णप्रपञ्चः – व्याप्तलोकः । श्रीमान् – हनूमान् जीमूतः मेघः जगतां जीवनोच्छ्रायं – जीवनातिशयम् उच्चैः कलयत्विति सम्बन्धः । रूपकालङ्कारः ॥ ५१ ॥

**क्रुद्धो दासः कृतान्तो भिषगहितजनो मित्रमापच्च सम्पत्**
**वैरस्येन ग्रहाणां विहतिरपि पदे दिष्टिरुच्चैश्शुभानाम् ।**
**ज्वाला वह्नेश्च माल्यं जगति कथयतः पावनेर्नाम पुंसः**
**तस्मिन् विन्यस्तभारः पुनरपि भविता कीदृशो वा न विघ्नः**
**॥ ५२ ॥**

क्रुद्ध इति । पावनेर्हनूमतः नाम अभिधां कथयतः – पठतः पुंसः – पुरुषस्य क्रुद्धः कृतान्तः दासो भवत्विति सर्वत्रानुषङ्गः । भिषक् – अहितजनः । मित्रम् – अनुकूलम् । आपत् – सम्पत् । वैरस्येन – वैकल्येन । ग्रहाणां विहृतिः – सञ्चारः उच्चैः शुद्धानां पदे दृष्टिः । वह्नेः ज्वालाभा माल्यं माल्यवत् शीतलम् । तस्मिन् हनूमति विन्यस्तभारः – न्यस्तभरः कीदृशो वा भविता ? न विद्मः – न जानीमः । पुनश्शब्दो वाक्यालङ्कारे । अतिशयोक्त्यलङ्कारः ॥ ५२ ॥

**बुद्धिर्वर्धिष्यते द्रागबलमपि च करे धर्तुमास्ते प्रपञ्चं**
**कीर्तिर्व्याप्नोति विश्वं धृतिरपि च परां कोटिमाढौकते च ।**
**उत्साहस्संवृणीते विधिरपि च लिखत्युन्नतं चायुरास्ये**
**लब्धश्रीवायुसूनोस्स्तवननवसुधामज्जनानां जनानाम् ॥**
**॥ ५३ ॥**

बुद्धिरीति । बुद्धिः – प्रज्ञा वर्धिष्यते – वर्धते । द्रागिति सर्वत्र । बलमपि च प्रपञ्चं धर्तुम् करे – हस्ते आस्ते । कीर्तिर्विश्वं व्याप्नोति – विश्वव्यापिनी भवति । धृतिः धैर्यमपि परां कोटिम् – उत्कृष्टकोटिम् आढौकते – आप्नोति । उत्साहस्संवृणीते – वृणोति । विधिः – विधाता उन्नतं – दीर्घम् आयुर्लिखति । लब्धश्रीवायुसूनुस्तवननवसुधामज्जनानां – प्राप्तहनूमत्स्तोत्रामृतस्नानानां जनानामित्यर्थः । बुद्धिर्बलं यशोधैर्यमिति स्मरणात् स्वभावोक्त्यलङ्कारः ॥ ५३ ॥

**रक्षःपुर्यां समीरप्रभवमणिमहावालदण्डाग्रभाग –**
**प्रत्यञ्चच्चित्रभानोः किसलयितशिखाश्रेणिरुज्जृम्भते स्म।**
**अन्विष्यान्विष्य रक्षस्समुदयहतकप्राणवायून्निहन्तुं**
**प्रायामे वेणुदण्डे प्रविदळिततमा दीपरेखेन रात्रौ ॥**
**॥ ५४ ॥**

रक्षःपुर्यामिति । रक्षःपुर्यां – लङ्कायां समीरप्रभवमणेः – हनूमतः महावालदण्डस्य प्रभावे प्रत्यञ्चतः चित्रभानोः जृम्भमाणा किसलयित–पल्लवा अरुणशिखाश्रेणिः – ज्वालापङ्क्तिः रक्षस्समुदयहतकानां राक्षस–निचानां प्राणा एव वायवः तानन्विष्यान्विष्य निहन्तुं प्रायामे अतिदीर्घे वेणुदण्डे वंशे निहिता दीपरेखेव रेजे–रराज । उत्प्रेक्षालङ्कारः ॥ ५४ ॥

**तीर्त्वा कुल्यामिवाल्पां सलिलनिधिपतेः पारमुद्दामवृत्त्या**
**सीताभिज्ञानरत्नानयनमतिजवादस्तु कीशस्य चित्रम् ।**
**रक्षो मातङ्गयूथप्रदळनमसकृत्तिग्मधारैर्नखाग्रैः**
**यस्याश्चर्यं च कुर्याद्भुवि पवनवटोः केसरिप्रौढसूनोः ॥**
**॥ ५५ ॥**

तीर्त्वेति । सलिलनिधिपतेः – समुद्रराजस्य पारं पश्चात्तीरम् । अल्पां नीचां कुल्यामिव तीर्त्वा अतिक्रम्य । सीतायाः सकाशात् अभिज्ञानरत्नानयनं चूडामण्यानयनं कीशस्य कपिविषये चित्रमस्तु – आश्चर्यं भवतु । एतादृशकृत्यस्य कपिषु कुत्राप्यदृष्टत्वादिति भावः । केसरिपुत्रस्य केसरिनाम्नः कपेस्तनयस्य सिंहकिशोरस्य च रक्षोमातङ्गयूथप्रदळनम् असकृत् सिंहशिशोः द्विपदळनस्य समानत्वादिति भावः । तिग्मधारैस्तीक्ष्णधारैः नखाग्रैः कस्याश्चर्यं न कस्यापीत्यत्यर्थः । [1]परिकरालङ्कारः ॥ ५५ ॥

**पर्यायेण प्रवृद्धे वपुषि सुरपथे विग्रहे शक्रजेतुः**
**स्रङ्मुक्ताहारघण्टासमुदयविधया स्फारनक्षत्रपङ्क्तिः ।**
**चूडाकण्ठावलग्ने स्फुरदुरुसुषमा भूषणं यस्य जातं**
**स श्रीमान् वीरचूडामणिरनिलसुतः सर्वदास्तु श्रियै वः**
**॥ ५६ ॥**

---

१. अलङ्कारः परिकरः साभिप्रायविशेषणैः । (चन्द्रालोकः)

**पर्यायेणेति** । पर्यायेण क्रमेण शक्रजेतुः इन्द्रजितः । निग्रहे – संहारे । वपुषि प्रवृद्धे सुरपथे – अन्तरिक्षे । स्रङ्मुक्ताहारघण्टा – समुदयविधया स्रक्त्वेन मुक्ताहारत्वेन घण्टासमूहत्वेन नक्षत्रपङ्क्तिः स्फुरन्ती उरुसुषमा सती यस्य चूडाकण्ठावलग्ने शिरसि कण्ठेऽवलग्ने । प्राण्यङ्गत्वादेकवद्भावः । भूषणजातम् आसीत् स श्रीमान् कान्तिमान् वीरचूडामणिः वीरश्रेष्ठः अनिलसुतः सर्वदा श्रेयसे सम्पदे अस्तु – भवत्वित्यर्थः ॥ ५६ ॥

**जङ्घालत्वे प्रमाणं झडिति जलनिधिर्लङ्घितो वायुसूनोः**
**लङ्कानेतुः पुरस्ताद्रघुपतिकथनं धीरतायां प्रमाणम् ।**
**द्रागानीतः प्रमाणं निशि च भुजबले लीलया द्रोणशैलो**
**वैदुष्ये च प्रमाणं विनिहितचरणावेव पूर्वापराद्री ॥**
**॥ ५७ ॥**

**जङ्घालत्व इति** । वायुसूनोः जङ्घालत्वे – जङ्घाबले लघुलङ्घितः सलिलनिधिः प्रमाणं – साक्षी । लङ्कानेतुः रावणस्य पुरस्तात् रघुपतिकथनं रामजल्पकथनं धीरतायां धैर्ये प्रमाणमिति सर्वत्रानुषङ्गः । निशि द्राक् शीघ्रमानीतो द्रोणशैलः भुजबले । वैदुष्ये विद्वत्तायां निहितचरणौ विन्यस्तपादौ पूर्वापराद्री – उदयास्तमयपर्वतौ इति सम्बन्धः । स्वभावोक्तिरलङ्कारः ॥ ५७ ॥

**तीर्त्वा लोकाननेकानुपरि मुरभिदा साकमादौ विवादी**
**हंसं धृत्वापि वर्ष्म त्रिपुरविजयिनो नो ददर्शाग्रचूडाम् ।**
**धाता तस्यैव चित्रं पुनरपि च पदे स्थानिवद्भावभङ्गा –**
**दिन्धानो गान्धवाही स्वयमपि भविता द्रष्टुमीशोऽपि तां द्राक्**
**॥ ५८ ॥**

**तीर्त्वेति** । अनेकान् लोकान् – बहून् लोकान् । भवनानि मुरभिदा साकमादौ पुरैव हंसं वर्ष्म धृत्वा – हंसो भूत्वापीत्यर्थः । त्रिपुरविजयिनः शम्भोः अङ्घ्रिचूडाम् – अङ्घ्रिभ्यां चूडा धर्ता सन् तस्यैव पदे ब्रह्मणः स्थाने इन्धानस्सन् [1]गान्धवाही स्वयमपि ताम् अङ्घ्रिचूडां द्राक् लघु द्रष्टुमीशो भविता समर्थो भवेत् । स्थानिवद्भावो व्यभिचरित इति भावः । [2]विरोधाभासालङ्कारः ॥ ५८ ॥

**सत्रं दक्षस्य तादृग्विकृतिमिव शिवानर्हतायां श्रुतायां**
**सङ्क्रुद्धो वीरभद्रस्त्रिपुरहरजटाघट्टनोद्गीर्णमूर्तिः ।**
**चक्रे न्यग्रोधचक्रे हरिजिदुपचितं यागमागामि वृद्धिं**
**यत्क्षिप्रं सप्रमोदं घटयतु भवतामञ्जनागर्भचन्द्रः ॥**
**॥ ५९ ॥**

**सत्रमिति** । यः न्यग्रोधचक्रे हरिजिदुपचितं इन्द्रजिदारब्धं सत्रं निकुम्भिळायागं शिवानर्हतायां पार्वत्यपूज्यतायां श्रुतायां सत्यां त्रिपुरहरजटाघट्टनोद्गीर्णमूर्तिः – जटाताण्डवजातविग्रहस्सन् क्रुद्धः वीरभद्रः दक्षस्य – दक्षब्रह्मणः अध्वरमिव कृतः सविकारं चक्रे – कृतवान् सः अञ्जनागर्भचन्द्रः भवतां मुदं सन्तोषं घटयतु जनयत्वित्यर्थः । [3]निदर्शनालङ्कारः ॥ ५९ ॥

---

१. गान्धवाही – वायुपुत्रः हनूमानित्यर्थः । गन्धवहः वायुः । गन्धवहस्य अपत्यं पुमान् गान्धवाही – अत इनिठनौ इति इनि प्रत्ययः ।

२. आभासत्वे विरोधस्य विरोधाभास उच्यते ।
विनापि तन्वि हारेण वक्षोजौ तव हारिणौ ॥ (चन्द्रालोकः श्लो० ७१)

३. वाक्यार्थयोस्सदृशयोरैक्यारोपो निदर्शना ।
यद्दातुस्सौम्यता सेयं पूर्णेन्दोरकलङ्कता ॥ (चन्द्रालोकः श्लो० ४८)

**उद्युञ्जानः प्रबाल्ये दिनकरमुदितं वीक्ष्य साक्षाद्बुभुक्षा-**
**प्रोद्रेकादत्तुमग्रे सकलदिविषदां यः पुरा पावनिस्सः ।**
**उच्चैर्ग्रासाभिलाषे रघुपतिसविधे वेतनाणोरभावात्**
**रक्षस्सन्दोहतेजः खररुचिवटुकान् हन्त कस्माद्विमुञ्चेत्**
**॥ ६० ॥**

उद्युञ्जानेति । प्रबाल्ये वयसि शैशव एव बुभुक्षाप्रोद्रेकात् – बुभुक्षातिशयात् सकलदिविषदां देवानां धुरि अग्रे उदितं दिनकरं बालसूर्यं साक्षाद्वीक्ष्य – स्वतो दृष्ट्वा तं ग्रसितुमुद्युञ्जानः – उद्युक्तोऽभूत् स हनूमान् रघुपतिसविधे – रामसमीपे वेतनाणोरभावात् – वेतनलेशाभावात् उच्चैर्ग्रासाभिलाषी सन् रक्षस्सन्दोहतेजः खरतरवटुकान् भक्ष्यविशेषान् कस्माद्धेतोः विमुञ्चेत्? हन्त ! इत्याश्चर्ये । [1]प्रहर्षणालङ्कारः ॥ ६० ॥

**अम्भोराशौ हनूमानतिविपुलतरं वालमत्यर्थदीर्घं**
**चास्तीर्य वाशु सर्वामपि च कपिचमूं नेतुमीशस्तटं द्राक् ।**
**सेतुस्सर्वार्थहेतुर्व्यरचि गिरिचयैर्ब्रह्महत्यापनुत्यै**
**काकुत्स्थेन त्रिलोकोद्धृतिविधिपटुना कारयित्रा नळेन ॥**
**॥ ६१ ॥**

---

१. उत्कण्ठितार्थसंसिद्धिः विना यत्नं प्रहर्षणम् ।
तामेव ध्यायते तस्मै निसृष्टा सैव दूतिका ॥
वाञ्छितादधिकार्थस्य संसिद्धिश्च प्रहर्षणम् ।
दीपमुद्योतयेद्यावत्तावदभ्युदितो रविः ॥
यत्नादुदयसिद्ध्यर्थात् साक्षाल्लाभः फलस्य च ।
निध्यञ्जनौषधीमूलं खनता साधितो निधिः ॥
(चन्द्रालोकः श्लो० १२६–१२८)

**अम्भोराशाविति** । हनूमान् अम्भोराशौ समुद्रे अतिविपुलतरं वालमास्तीर्य प्रस्तार्यैव सर्वां कपिचमूं कपिसेनां तटं कूलं द्राक् नेतुं प्रापयितुमीशस्समर्थ एव त्रिलोकस्योद्धृतिरुद्धारः तस्य विधिः क्रिया तस्यां पटुना निपुणेन काकुत्स्थेन रामेण कारयित्रा प्रयोजकेन नळेन साधनेन गिरिचयैः ब्रह्महत्यापनुत्त्यै सेतुर्व्यरचि सेतुं दृष्ट्वा समुद्रस्य ब्रह्महत्या व्यपोहतीति स्मरणात् । [1]काव्यलिङ्गमलङ्कारः ॥ ६१ ॥

**बिभ्यद्वेधः पुराणि भ्रमरकविधया भ्राम्यदुर्वीधराणि**
**न्यञ्चत्ताराणि शीर्यज्जठरघनघटानिष्पतच्चञ्चलानि ।**
**दष्ट्वा त्यक्त्वार्कबिम्बान्यलघुनखशिखाक्षीणवज्राणि भूयः**
**कल्याणं वः क्रियासुर्बहुपवनवटोश्शैशवक्रीडितानि ॥**
**॥ ६२ ॥**

**बिभ्यदिति** । बिभ्यन्ति वेधसः त्रस्तानि वेधसश्चतुर्मुखस्य पुराणि पदानि । भ्रमरकविधया – भृङ्गरीत्या भ्राम्यन्तः । उर्वीधराः – पर्वताः येषु तानि भ्रमत्पर्वतानि । न्यञ्चत्ताराणि – गळितनक्षत्राणि । शीर्यज्जरठ–घनघटानिष्पतच्चञ्चलानि – भिन्नजरठमेघसमूहपतच्चपलानि । दष्ट्वा त्यक्त्वार्कबिम्बानि ग्रस्तोन्मुक्तसूर्यमण्डलानि । अलघुनखशिखाक्षिप्तवज्राणि – उद्दामनखाग्रहतवज्रायुधानि पवनवटोर्हनूमतः शैशवक्रीडितानि बाल–क्रीडितानि वः बहु – अधिकं कल्याणं – मङ्गलं क्रियासुरिति सम्बन्धः। स्वभावोक्त्यलङ्कारः ॥ ६२ ॥

---

१. समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनम् ।
जितोऽपि मन्द कन्दर्प मच्चित्तेऽस्ति त्रिलोचनः ॥
(चन्द्रालोकः श्लो० ११८)

दास्यं स्वं ख्यापयित्रे स्वधुरि हनुमते दत्तविश्वाधिपत्यः
प्रत्यक्षादेव देवो रघुपतिरिति च प्राज्य एव प्रवादः ।
उल्लङ्घ्यैवाब्धिमुग्रां दशमुखनगरीं प्लोषयित्वा समग्रां
वार्ताहारी प्रियाया लघुपवनशिशुः कीदृशस्तेन भूयाम्
॥ ६३ ॥

दास्यमिति । स्वं – स्वीयं दास्यं दासभावं भावकर्मणोर्यगिति यक्प्रत्ययः। धुरि दासोऽहमिति पुरस्ताज्जल्पते हनूमते दत्तं विश्वाधिपत्यं येन स तथोक्तः विश्राणितश्च सांराज्य इत्यर्थः । प्रत्यक्षादेव साक्षादेव देवः रघुपतिरिति प्रवादः प्राज्य एव । अब्धिमुद्रां समुद्रपारम् उल्लङ्घ्यैव समग्रां कृत्स्नां दशमुखनगरीं लङ्कां प्लोषयित्वा दग्ध्वा प्रियायास्सीताया वार्ताहारी वृत्तान्तहारी सः पवनशिशुर्हनूमान् तेन रामेण कीदृशस्स्यात्? कैमुतिकन्यायेन कीदृग्बहुमानभाजनं स्यादित्यर्थः? अतिशयोक्त्यलङ्कारः ॥ ६३ ॥

दंष्ट्राभ्यां वायुसूनोस्सरसिरुहसखे दष्टमूले कपोले
तत्क्षोभच्छिन्नमूला कुहचनपतिता तस्य दन्ताः क्रमेण ।
दक्षावज्ञाप्रकुप्यत्त्रिपुरहरजटाजूटनिर्घातवेगात्
प्रत्युद्यद्वीरभद्रोद्भटकठिनकरव्याहृतिः कीर्तिमागात् ॥
॥ ६४ ॥

दंष्ट्राभ्यामिति । वायुसूनोः हनूमतः दंष्ट्राभ्यां सरसिरुहसखे भानौ कपोले अवच्छेद्यत्वं सप्तम्यर्थः । दष्टमूले – दष्टबिम्बे सति तत्क्षोभच्छिन्नमूलाः – तत्सङ्घर्षकृत्तमूलाः सन्तः तस्य भानोः दन्ताः क्रमेण कुहचन कुत्रचित् पतिताः गळिताः । दक्षावज्ञया – दक्षकृतावमानेन प्रकुप्यतः – त्रिपुरहरस्य जटाझूटनिर्घातवेगेन प्रत्युद्यतः – वीरभद्रस्य

उद्भटकठिनकरव्याहृतिः करताडनं कीर्तिमागात्प्राप । [1]विषमालङ्कारः ॥ ६४ ॥

**तेजोरौद्रं दधाने नियमवति चिरादक्षरं नित्यताढ्ये**
**यस्मात्तस्मात्कथञ्चित् क्वचिदपि च कदाप्यत्र सत्पञ्चवक्त्रे।**
**द्रष्टुं विश्वं प्रगल्भे निरवधिकतयाप्यप्रतिद्वन्द्ववृत्त्या**
**वेधस्स्थानेऽधिकारः खलु पवनवटोस्सर्वदा सर्वहृद्यः ॥**
**॥ ६५ ॥**

तेज इति । रौद्रं – रुद्रसम्बन्धि तेजः दधाने बिभ्रति नियमवति – जितेन्द्रिये चिरादक्षरं नित्यताढ्ये – चिरविधृतदृढनित्यत्वे यस्मात्तस्मात् कथञ्चिदपि कदाचिदप्यत्र सत्पञ्चवक्त्रे – निर्भीतिकपञ्चवक्त्रे विश्वं स्रष्टुं निर्मातुं प्रगल्भे समर्थे निरवधिकतया अप्रतिद्वन्द्ववृत्त्या प्रतिपक्ष–शून्यस्थित्या वेधस्स्थाने ब्रह्मपदे पवनवटोः हनूमतोऽधिकारः प्रभुत्वं सर्वथा सर्वप्रकारेण । प्रकारार्थे थाल् । सर्वहृद्यः खलु । [2]व्यतिरेकालङ्कारः ॥ ६५ ॥

---

१. विषमं वर्ण्यते यत्र घटनाननुरूपयोः ।
क्वेयं शिरीषमृद्वङ्गी क्व तादृङ्मदनज्वरः ॥
विरूपकार्यस्योत्पत्तिरपरं विषमं मतम् ।
कीर्तिं प्रसूते धवलां श्यामा तव कृपाणिका ॥
अनिष्टस्याप्यवाप्तिश्च तदिष्टार्थसमुद्यमात् ।
भक्ष्याशया हि मञ्जूषां दृष्ट्वाखुस्तेन भक्षितः ॥
(चन्द्रालोकः श्लो० ८३–८५)

२. व्यतिरेको विशेषश्च उपमानोपमेययोः ।
शैला इवोन्नतास्सन्तः किन्तु प्रकृतिकोमलाः ॥ (चन्द्रालोकः)

कैङ्कर्यं राघवेन्दौ तदनु तदनुजे तत्तया दत्तदृष्टिः
सीतायां मातृभावः तदनु च भरते लक्ष्मणस्यानुजेऽपि ।
तत्सादृश्येन बुद्धिस्सकलकपिवरेष्वन्वहं सार्धमुच्चैः
तत्सर्वं सर्वभावैस्सकृदपि मनसा भाविते पावनौ स्यात् ॥
॥ ६६ ॥

[१](कैङ्कर्यमिति । राघवेन्दौ) – रामचन्द्रे कैङ्कर्यं दास्यं, तदनु – तदनुजे लक्ष्मणे तत्तया – रामत्वेन दत्तदृष्टिः – दर्शनम् । सीतायां [२](मातृभावः – मातृबुद्धिः) तदनु – भरते लक्ष्मणस्यानुजेऽपि शत्रुघ्नेऽपि तत्सादृश्येन लक्ष्मणसदृशत्वेन बुद्धिः भावना [३](सकलकपिवरेषु अन्वहं) नित्यम् उच्चैस्सार्धं एतत्सकलमपि इदं सर्वमपि पावनौ हनूमति सकृत् एकवारं [४](भाविते ................) अतिशयोक्त्यलङ्कारः ॥ ६६ ॥

पाणिस्थाषाढदण्डः परिकलितशिखः स्वर्णयज्ञोपवीतः
[५]सद्यो ................ पटशिखाप्रोल्लसन्मांसनाङ्गः ।
विद्युद्विभ्राजमौञ्जीघटितकटितटः पीतभानुः पुरस्तात्
.............. भुवनविजयव्यग्रवालाञ्चलो वः ॥ ६७ ॥

---

१. कैङ्कर्यमिति । राघवेन्दोः इति भागोऽयं मातृकायां त्रुटितः । अतः आवरणे दत्तः।

२. मातृभावः – मातृबुद्धिः इति भागः मातृकायां त्रुटितः । अत एव आवरणे प्रदत्तः ।

३. सकलकपिवरेषु अन्वहम् इति भागः मातृकायां त्रुटितः । सम्पादनसमये योजितोऽयं भागः आवरणे प्रदत्तोऽस्ति ।

४. भाविते ......... इति त्रुटितभागः मातृकायामस्ति । स च – एकवारं मनसा पावनौ हनूमति भाविते – चिन्तिते सति स्यात् – सर्वमपि भवेदिति स्यात् ।

५. सद्यो ..... पटशिखा इति भागः मातृकायां त्रुटितः ।

पाणिस्थ इति । पाणिस्थाषाढदण्डः – हस्तधृतपलाशदण्डः । [1](पालाशदण्ड आषाढ) इत्यमरः । परिकलितशिखः – भासुरशिरोरुहग्रन्थिः। [2]स्वर्णयज्ञोपवीतः – .................. व्यद्विमलपटस्य दिव्यपरिधानस्य शिखाभ्याम् अग्रभागाभ्यां प्रोल्लसन्मांस(नाङ्गः)........................... डः । विद्युद्विभ्राजमौञ्जीघटितकटितटः तटिल्लसन्मौञ्जीवेष्टितमध्यः पीतभानुः पीत .................................. ग्रवालाञ्चलः जगद्विजयोत्कण्ठितपुच्छाग्रभागः आञ्जनेयः वः पुरस्तात् आवि ................ ॥ ६७ ॥

**[3]आयस्तास्स्वस्वहस्तादतिविपुलतरं मन्दरं मूर्ध्नि कृत्वा**
**देवा सेन्द्रा इति स्वामनितरसुलभां दर्शयन्नुग्रशक्तिम् ।**
**द्रोणाहार्यस्य दोष्णोरुपरि च शिरसा गाढमेकोऽपि वोढा**
**स्वानेता सर्वथा वः सवितृकुलपतेः किङ्करं शं करोतु ॥**
**॥ ६८ ॥**

आयस्ता इति । सेन्द्रा अपि इन्द्रसहिता अपि देवाः – विबुधाः स्वस्वहस्तात् – स्वस्वकरात् अतिपुलतरं अतिविशालं मन्दरं मन्दाचलम् अनितरसुलभां – स्वीयाम् उग्रशक्तिम् – अधिकबलं दर्शयन्तोऽपि आयस्ताः – आयासं प्राप्ताः । द्रोणाहार्यस्य – द्रोणाचलस्य दोष्णोरुपरि – शिरसि कृत्वा एकोऽपि गाढं वोढा सन् स्वानेता – सुष्ठु आनयनपटुः सवितृकुलपतेः – रामस्य किङ्करः – दासः सर्वथा – सर्वप्रकारेण शं

---

१. पालाशदण्ड आषाढः इत्यमरः इति भागः मातृकायां त्रुटितः ।

२. स्वर्णयज्ञोपवीतः ..... व्यद्विमलपटस्य इति भागः मातृकायां त्रुटितः । अस्य पद्यस्य मूलभागे व्याख्यानभागे च अनेके भागाः त्रुटिताः । गत्यन्तराभावात् तथैव प्रदत्ताः ।

३. मातृकायां – श्लोके आयुस्त्वा इत्यपपाठः वर्तते । व्याख्याने तु आयस्ता इत्यस्ति । अर्थानुरोधात् आयस्ता इत्येव पाठस्समुचित इति स एव पाठः स्वीकृतः।

– सुखं करोतु – क्षेमं कुर्यादित्यर्थः । ¹व्यतिरेकालङ्कारः ॥ ६८ ॥

**कट्यूर्ध्वं सप्तलोकी निवसति तदधः स्थानमाशेषमस्य**
**मध्यो मध्यस्थयोरित्यविबुधपरिषद्व्यापकत्वेन धात्रा ।**
**मौञ्जीबन्धस्स्फुटमनिलवटोः बद्धसूत्रस्य भङ्गीम्**
**अङ्गीकृत्याभिरामप्रतिकलमपि वो भद्रमग्र्यं प्रदद्यात् ॥**
**॥ ६९ ॥**

कट्यूर्ध्वमिति । कटयूर्ध्वं – कट्या उपरिभागः । सप्तलोकी – सप्तानां लोकानां समाहारः सप्तलोकी – सप्तसङ्ख्याका इत्यर्थः । आशेषं – आपातालस्थानं कट्यधः – तस्याः कट्याः मध्यः । तयोः मध्यः – उर्ध्वयोर्लोकयोर्मध्यः इत्येवं प्रकारेण अविबुधपरिषद्व्यापकत्वेन – अजानतां ज्ञानजनकेन धात्रा – ब्रह्मणा बद्धसूत्रस्य – प्रमाणसूत्रस्य भङ्गीं – रीतिम् अङ्गीकृत्य स्फुटम् अभिराम इव प्रदीप्तः अनिलवटोः मौञ्जीबन्धः – उद्दाममौञ्जी वः – युष्माकं प्रतिकलमपि – प्रतिपदमपि अग्र्यं श्रेष्ठं शुभं दद्यात् देयादिति सम्बन्धः । उत्प्रेक्षालङ्कारः ॥ ६९ ॥

**प्राकारो राघवेन्दोस्सकलकपिचमूं रक्षितुं स्यात्कदाचि –**
**न्नासीरे स्यात्कदाचित् प्रतिभटभयदो प्रोद्धितः केतुदण्डः ।**
**निःश्रेणी वा कदाचिद्दशमुखनगरीसालमारोहतां स्यादि –**
**त्युत्प्रेक्ष्यस्स सर्वैर्भवतु शुभविधौ पावनेर्वालधिर्वः ॥**
**॥ ७० ॥**

प्राकार इति । राघवेन्दोः – रामचन्द्रस्य । सकलकपिचमूं – सर्वां कपिसेनां । रक्षितुं कदाचित्प्राकारः सालः स्यात् । कदाचित् नासीरे – सेनामुखे प्रोद्धितः – उत्तम्भितः । प्रतिभटभयदः – शत्रुभयङ्करः ।

---

1. उपमानाद्यदन्यस्य व्यतिरेकस्स एव सः । (काव्यप्रकाशः १०–१७)

केतुदण्डः – ध्वजदण्डः । कदाचित् दशमुखनगरीसालं – लङ्काप्राकारम् आरोहतां कपीनामिति शेषः । निःश्रेणी वा निःश्रेणिका वा स्यात् इत्येवं प्रकारेण सर्वैः बहुभिरुत्प्रेक्ष्यः – ऊह्यः सः प्रसिद्धः पावनेर्वालधिः वालः शुभविधौ निमित्तसप्तमी । भवतु । उत्प्रेक्षालङ्कारः ॥ ७० ॥

**शेषं न्यक्कृत्य भूमीवलयभरमिमं धर्तुमायस्तमारात्**
**धृत्वा द्विस्सप्तलोकानपि भुजशिखरे स्थातुमीशो हनूमान् ।**
**नैवं भूतोऽपि तादृग्रघुपतिचरितस्थानगामित्वभङ्ग्या –**
**न्नैयत्येनैव तं वो भजत भुवि जनाः पावनिर्भावुकाय ॥**
**॥ ७१ ॥**

शेषमिति । इमं परिदृश्यमानं भूमीवलयभरं भूचक्रभारं धर्तुं वोढुम् आयस्तं प्राप्तायासं शेषं न्यक्कृत्य हरित्वा भुजशिखरे दोरग्रे द्विस्सप्तलोकानपि धृत्वा स्थातुमीशोऽपि समर्थो यः हनूमान् नैयत्येन रघुपतिचरित–स्थानगामित्वभङ्ग्या रामकथास्थानगामित्वलोकात् नैवं भूः नैवं कृतवान् भुवि जनाः तं पावनिं भावुकाय भजत सेवध्वम् । अतिशयोक्त्यलङ्कारः ॥ ७१ ॥

**स्वीया एव प्रबोधाः कतिपयकपयश्चित्रगुप्तास्सगुप्ता**
**ये ये रामैकभक्ता दिशि दिशि भुवने ते च ते चातिमान्याः ।**
**अग्रे पार्श्वेऽधराच्च प्रतिभटभयदः सर्वदोग्रः कठोरो**
**रक्षःपापान्तकस्य श्वसनतनुभवो वालधिः कालदण्डः ॥**
**॥ ७२ ॥**

स्वीया एवेति । स्वीया एव – स्वकीया एव । कतिपयकपयः प्रबोधाः सगुप्ताः चित्रगुप्ताः दिशि दिशि ये ये रामभक्ताः ते ते मान्याः धर्मात्मानः। अग्रे पार्श्वे अग्रभागस्य वलयाकारत्वादिति भावः । अधराच्च

अधः प्रदेशावच्छेदेन प्रतिभटभयदः शत्रुभयङ्करः सर्वदोग्रः सदा भीषणः कठोरः रक्षःपापान्तकस्य रक्षांस्येव पापानि तेषामन्तकस्य अन्तकरूपस्य श्वसनतनुभवः हनूमतः वालधिः कालदण्डः दण्डाख्यसाधनविशेषः । रूपकालङ्कारः ॥ ७२ ॥

तेजस्वित्वं कपित्वे धृतिरनितरगा चार्तमुद्धर्तुमुच्चैः
नैश्चल्यं निर्मलान्तःकरणपरिणतिर्निर्जरैस्सेव्यता च ।
सर्वज्ञत्वं च साक्षात् त्रिभुवनमहिता सत्यसन्धा प्रसिद्धा
रज्जन्त्यन्योन्यलुब्धा हनुमति सुगुणे रामदास्येन सार्धम्
॥ ७३ ॥

**तेजस्वित्वमिति।** तेजस्वित्वं – तेजोवत्वं कपित्वे आश्रयत्वं सप्तम्यर्थः। अनितरगा अनन्यसदृशा धृतिः धीरता च आर्तं दीनम् उद्धर्तुं रक्षितुम् उच्चैः उन्नतं नैश्चल्यं चाञ्चल्यराहित्यं निर्मलान्तःकरणपरिणतिः चित्तवृत्तिपरिपाकविशेषः । अत्र निर्मल इति विशेषणेन असदृशत्वं द्योत्यते । निर्जरैः जरारहितैः देवैश्च सेव्यता रुद्रत्वेन प्रसिद्धत्वादिति भावः । अत एव सर्वज्ञत्वं भूतभविष्यद्वर्तमानत्वकालीनसर्व-विषयकज्ञानाश्रयत्वमिति यावत् त्रिभिः अवयवैरुपलक्षितो लोकः त्रिभुवनं तस्मिन् महिता उत्कृष्टा सत्या च सा सन्धा च सा तथोक्ता सत्यप्रतिज्ञा अनवरतरामदासत्वेन सार्धं समम् अन्योन्यं परस्परं लुब्धा आसक्ता रज्यन्ति अनुरक्ता भवन्ति । उत्प्रेक्षालङ्कारः ॥ ७३ ॥

विश्वामित्रादुपात्तं किमपि रघुपतेर्दिव्यमस्त्रं करस्थं
शस्त्रं निर्मुक्तकोशं सकलनिशिचरप्राणसंहारदक्षम् ।
मन्त्रश्चावृत्यभावे व्यपचितसकलस्वार्थसिद्धिर्गरीयान्
सर्वस्वं राघवेन्दोः जयति जगदलङ्कारभूतः प्रभुर्वः ॥
॥ ७४ ॥

**विश्वामित्रेति** । राघवेन्दोः – रामचन्द्रस्य जगदलङ्कारभूतः – भूषणायमानः प्रदूतः दूतश्रेष्ठः हनूमान् विश्वामित्रादुपात्तं तस्मात्प्राप्तमित्यर्थः। सकलनिशिचरप्राणसंहारदक्षं निखिलराक्षसनाशकम् इत्यर्थः । रघुपतेः अस्त्रं निर्मुक्तकोशं त्यक्तावृतिकं करस्थं हस्तगतं किमपि अनिर्वाच्यं शस्त्रम् आवृत्त्यभावेऽपि निरतजपादिराजात्येऽपि उपवीत एधितः सकलः समग्रः स्वार्थः श्रेष्ठः तत्सिद्धिर्येन स तथोक्तः अत एव गरीयान् गुरुतरः सर्वस्वं मन्त्रं जयति सर्वातिशायितया वर्तत इत्यर्थः । रूपकाङ्कारः ॥ ७४ ॥

**मोचात्वग्वन्मृदु स्यादपि च शिखरिराडायसः कायदार्ढ्ये**
**दोष्णोरायामिकायामपि च फणिपतिः स्वल्प एव प्रमाणे।**
**प्रांशुत्वे यस्य तादृग्बलिनियमपटुर्वामनो वामनस्स्यात्**
**दारापूर्त्यै स भूयादनिलतनुभुवः सर्वदा तत्सहर्षम् ॥**
**॥ ७५ ॥**

**मोचात्वगिति** । यस्य हनूमतः कायदार्ढ्ये शरीरकाठिन्ये आयसः अयोमयः शिखरिराडपि पर्वतोऽपि मोचात्वग्वत् कदळीत्वगिव मृदु स्यात् – कोमलं भवेत् । पर्वतातिशायिकठिनशरीर इत्यर्थः । दोष्णोः भुजयोः आयतायां दीर्घतायां प्रमाणे परिमितिविषये श्रयमाणायां फणिपतिः शेषः स्वल्प इव रज्जुप्राय इत्यर्थः । प्रांशुत्वे च औन्नत्ये च तादृशः प्रसिद्धः। बलिनामराक्षसस्य नियमने शिक्षणे पटुर्निपुणः वामनः त्रिविक्रमः वामनः ह्रस्वः । ह्रस्वश्च वामनः खर्वः इति यादवः । भवेदित्यर्थः । सः अनिलतनुभवः हनूमान् सर्वदा सर्वप्रकारेण सहर्षं ससन्तोषं यस्मिन् कर्मणि तत्तथोक्तं सः आशापूर्त्यै इष्टपूरणाय भूयात् । अतिशयोक्त्यलङ्कारः ॥ ७५ ॥

क्षोणीपाण्यग्रभागो जलधिरपि शिशुप्रायलङ्घ्या च कुल्या-
पङ्क्तिः क्षोणीधराणां पथि पथि वितता कन्तुकश्रेणिरेव ।
लावण्यश्रीमनोज्ञा निरवधिकरसाः पूरुषा ये च नार्यो
यद्दृष्ट्या सप्रमोदं घटयतु भवतां मारुतिर्मेरुधैर्यः ॥
॥ ७६ ॥

क्षोणीति । यद्दृष्ट्या यद्बुद्ध्या क्षोणीपाण्यग्रभागः हस्ताग्रप्रदेशः । जलधिरपि समुद्रोऽपि शिशुप्रायेण लङ्घ्या कुल्येव कुल्याल्पा कृत्रिमा सरित् इत्यमरः। क्षोणीधराणां पर्वतानां पङ्क्तिः – समूहः पथि पथि वितता विस्तृता कन्तुकश्रेणिरेव तद्वदल्पीयसीत्यर्थः । लावण्यश्रिया सौन्दर्यलक्ष्म्या मनोज्ञा रम्या निरवधिकरसा निर्भरानुरागाः नार्यः स्त्रियः पूरुषा एव पुरुषप्राया एव मेरुधैर्यः स मारुतिः भवतां प्रमोदं सन्तोषं घटयतु । अतिशयोक्त्यलङ्कारः ॥ ७६ ॥

यद्दास्यं रामभानोः परिहृतविषमं काल्यमर्घ्यप्रदानं
यत्कैङ्कर्यं च भूमीदुहितुरभिमतो राघवस्वस्तिपाठः ।
यत्संरम्भश्च सेवाविधिषु हरिचमूं केतुमेव प्रमूल्यं
तस्य श्रीवायुसूनोरपि जगति परं कस्समस्स्याद्गुणौघैः ॥
॥ ७७ ॥

यदिति । यस्य हनूमतः सम्बन्धि दास्यं दासभावः, राम एव भानुः सूर्यः तस्य । उद्देश्यत्वं षष्ठ्यर्थः । परिहृतविषमं स्रस्तदोषं यस्मिन् कर्मणि तत्तथोक्तं काल्यं प्रातस्सन्ध्याकालीनम् अर्घ्यप्रदानम् अर्घ्यविधिः । यत् कैङ्कर्यं भूमीदुहितुः सीतायाः अभिमतः सम्मतः राघवस्य रामस्य स्वस्तिपाठः क्षेम एव प्रवचनम् । स्वस्त्याशीः क्षेमपुण्यादौ इत्यमरः । यत्संरम्भश्च यत्प्रयत्नश्च सेवाविधिषु सेवाचरणेषु हरिचमूं कपिसेनां क्रेतुमादातुं प्रमूल्यमेव

मौल्यधनमेतदित्यर्थः । रूपकालङ्कारः ॥ ७७ ॥

**मोघीकर्तुमिच्छन्निव जगति घटीनन्दनं धूर्तवृत्तिं**
**कोपोद्रेकप्रसङ्गप्रकटकरपुटप्राप्तसत्पार्णवीकम् ।**
**विद्याद्विस्सप्तसिन्धूनपि च करतले स्वल्पयामास यस्मै**
**विश्वाश्चर्यप्रसूतिः विदलयतु शुचं विक्रमात्पावनिर्वः ॥**
**॥ ७८ ॥**

**मोघीकर्तुमिति** । यः हनूमान् कोपोद्रेकप्रसङ्गेन कोपाधिक्यप्रसक्त्या प्रकटं व्यक्तं करपुटप्राप्ता चुळुकगता सप्तार्णवी यस्य स तथोक्तः तं, धूर्तवृत्तिं स्वच्छन्दवृत्तिं घटीनन्दनम् अगस्त्यं विक्रमात् स्वसामर्थ्यात् जगति लोके मोघीकर्तुं वितथीकर्तुम् इच्छन्निव । विद्या एव द्विस्सप्तसिन्धवः चतुर्दशविद्याः तानपि स्वे स्वीये करतले स्वल्पयामास अल्पीचकार । विश्वाश्चर्यप्रसूतिः सर्वाश्चर्यजन्मभूमिः पवनस्यापत्यं पुमान् पावनिः स हनूमान् वः युष्माकं शुभं विदलयतु । विघटयत्वित्यर्थः । उत्प्रेक्षालङ्कारः स्वभावातिशयोक्त्यलङ्कारश्च ॥ ७८ ॥

**प्रज्ञा भल्लूकनेतुः भृशमनिलवटोर्लाघवं स्वैरमाजौ**
**सख्यं चाम्भोजबन्धोस्तनुभुवि च नळे दुष्करे कर्तुमोजः ।**
**सौमित्रौ पत्रिवेगः धृतधनुषि करे राघवे दूरपातो**
**यद्येतत्समस्तं विलसति हनुमानन्वहं स्वामिनोऽर्थो ॥**
**॥ ७९ ॥**

**प्रज्ञेति** । भल्लूकनेतुः जाम्बवतः प्रज्ञा बुद्धिः । आजौ युद्धे अनिलवटोः नीलस्य भृशं कृत्स्नं स्वैरं स्वतन्त्रं लाघवं गतिविशेषः । अम्भोजबन्धोः सूर्यस्य तनुभुवि सुग्रीवे सख्यं साचिव्यं दुष्करे दुष्प्रापे नळे च ओजः कर्तुं सौमित्रौ लक्ष्मणे पत्रिवेगः करे धृतधनुषि राघवे दूरपातः लक्ष्यभेदनं

यद्यत् तत्सर्वं हनूमति स्वामिनः अर्थे कार्ये अन्वहं प्रतिदिनं विलसति भाति । [1]उल्लेखालङ्कारः ॥ ७९ ॥

सत्रा सौमित्रिणैव क्षितिदुहितृपतिर्येकभागो बलित्वे
भागोऽप्यन्यस्य सौरिप्रमुखकपिवरा मारुतिश्चैकभागः ।
गाढा सत्यैव लोके दिशि दिशि च भूव्यापिनी मानमत्र
त्रिष्वेकस्ताडितोऽभूद्दनुजपुरिबले वायुपुत्रेण यस्मात् ॥
॥ ८० ॥

सत्रेति । बलित्वे बलवत्वे सौमित्रिणा सत्रैव लक्ष्मणेन सहैव क्षितिदुहितृपतिः सीतापतिः एको भागः । अन्योभागश्च सौरिप्रमुखकपिवराः सुग्रीवादयः कपिवराः कपिश्रेष्ठाः । मारुतिश्च एकभागः । अत्र अस्मिन्नर्थे लोके दिशि दिशि च व्यापिनी व्याप्ता सत्या गाढैव कथैव मानं प्रमाणम् । यस्माद्धेतोः त्रिषु भागेषु दनुजपुरि लङ्कायां वर्तमाने बले एको भागः वायुपुत्रेण ताडितः हनूमता ताडितः अभूत् नाशितो बभूव इत्यर्थः। काव्यलिङ्गमलङ्कारः ॥ ८० ॥

स्फारप्रौढावलेपप्रसृतकरपुटीदत्तमाद्यच्चपेटा –
प्रोक्षिप्तक्षुद्ररक्षः परिवृढमुकुटीमुक्तमुक्ताप्रसूनैः ।
आदत्तास्तोकनाकिद्रुमभवसुमनोवर्षिसत्पर्षिसङ्घ –
प्रत्यर्चासम्भ्रमं यस्स हरतु दुरितं सर्वदा मारुतिर्वः ॥
॥ ८१ ॥

---

१. बहुभिर्बहुधोल्लेखादेकस्योल्लेख इष्यते ।
स्त्रीभिः कामोऽर्थिभिस्स्वर्द्रुः कालश्शत्रुभिरैक्षि सः ॥
एकेन बहुधोल्लेखेऽप्यसौ विषयभेदतः ।
गुरुर्वचस्यर्जुनोऽयं कीर्तौ भीष्मश्शरासने ॥ (चन्द्रालोकः ७तमोऽलङ्कारः)

**स्फारेति** । स्फारेस्सान्द्रः प्रौढस्समर्थः अवलेपः दर्पः तेन प्रसृता करपुटी हस्तप्रदेशः तया दत्ता माद्यन्ती प्रमदप्रधाना चपेटा ताडनं तया प्रोत्क्षिप्ताः ऊर्ध्वं क्षिप्ताः क्षुद्राः रक्षः परिवृढाः रक्षः पतयः तेषां मुकुटीमुक्ताः किरीटच्युताः मुक्ता मौक्तिकाः ता एव प्रसूनानि तैः करणैः अस्तोका अनल्पा नाकिद्रुमप्रभवाः कल्पवृक्षसम्भवाः सुमनसः तान् वर्षन्तीति तथोक्ताः सप्त खलु ऋषयः इदमुपलक्षणं तेषां सङ्घः समूहः तस्य प्रत्यर्चासम्भ्रमं प्रत्याराधनसन्तोषं य आदत्त कृतवान् स मारुतिर्वः सदा दुरितं मालिन्यम् हरतु शमयतु । उत्प्रेक्षालङ्कारः ॥ ८१ ॥

**धृत्वा काकुत्स्थमंसे रणभुवि वसतो रावणस्याग्रभूमौ**
**अत्यूर्ध्वम् वर्धमानो वियति पवनभूः वस्स पायादपायात्।**
**रुष्टं जेतुं क्षणार्धे समिति दशमुखं स्वामिनो राघवेन्दोः**
**सुस्थानस्थापनार्थी विषमगतिभृतां विश्रुतानां ग्रहाणाम्**
**॥ ८२ ॥**

**धृत्वेति** । रणभुवि वसतः युद्धभूमिस्थितस्य रावणस्य अग्रभूमौ पुरोभागे काकुत्स्थं रामम् अंसे भुजशिरोभागे धृत्वा रुष्टं रोषवन्तं दशमुखं रावणं क्षणार्धे निमिषमात्रे जेतुं स्वामिनः स्वस्येति विशेषः रामचन्द्रस्य विषमगतिभृतां विषमस्थानस्थानां विश्रुतानां नवत्वेनेति शेषः ग्रहाणां सुस्थानस्थापनार्थी समस्थानं प्रापयिषुरिवेत्युत्प्रेक्षा वियति आकाशे वर्धमानः सः पवनभूः वः युष्मान् अपायात् प्रमादात् पायात् रक्षतु ॥ ८२ ॥

**प्रत्यालीढाङ्घ्रिपद्मः करविधृतगुरुक्ष्माधरो वज्रवर्ष्मा**
**मर्यादातीतधैर्यद्विगुणबलपटुर्मांसलस्थूलकण्ठः ।**
**विष्वकृञ्चप्रतेजा विधिलिखितमपाकर्तुमत्युग्रशक्तिः**
**कुर्यात् काकुत्स्थदूतः कुतुकमनुपदं कूटजेता रिपूणाम्**
**॥ ८३ ॥**

प्रत्यालीढमिति । प्रत्यालीढं पुरः पुरः प्रसृतम् अङ्घ्रिपद्मं यस्य तथोक्तः करेण विधृतः गुरुः महान् क्ष्माधरः पर्वतो यस्य सः वज्रवर्ष्मा वज्रशरीरः। मर्यादातीतम् अनवधिकं धैर्यं द्विगुणमपारं बलं यस्य तस्मादेव पटुः । मांसलः बलवान् स्थूलः पीनः कण्ठो यस्य विष्वकृञ्चप्रतेजाः सर्वत्र् प्रसृतकान्तिः विधिलिखितमप्यपाकर्तुं परिमार्ष्टुम् उग्रस्य शिवस्य शक्तिः यस्य स तथोक्तः । रिपूणां कूटजेता सकलशत्रुनाशक इत्यर्थः । काकुत्स्थस्य दूतः हनूमान् अनुपदम् असृतपदं यस्मिन् कर्मणि तत्तथोक्तं कुतुकं सन्तोषं कुर्यात् क्रियात् इत्यर्थः । स्वभावोक्त्यलङ्कारः ॥ ८३ ॥

**सन्ध्याबन्धूकलक्ष्मीःपरिहसनपटुः प्रस्फुरद्यस्य वक्त्रं**
**राथाङ्गी रश्मिभङ्गीमपि च मुररिपोः भीतरक्षःप्रपञ्चाम्।**
**न्यक्कुर्वाणं निसर्गप्रसृमरमहसा भूरि लौहित्यभूम्ना**
**सिंहीं संहारशौण्डस्स हरतु कलुषं बन्धुरं गान्धवाहिः**
**॥ ८४ ॥**

सन्ध्येति । सन्ध्याबन्धूकः सन्ध्याकालीनबन्धूकः अथवा संन्ध्याबन्धूकयोः सन्ध्यारागजपाकुसुमयोः लक्ष्म्याः कान्त्याः परिहसनपटुः अपहसनसमर्थः प्रस्फुरत् प्रकाशवत् भीतरक्षःप्रपञ्चं त्रस्तरक्षस्समूहां राथाङ्गीं चक्रसम्बन्धिनीं रश्मिभङ्गीं कान्तिवैदग्धीमपि भूरि लौहित्यभूम्ना अधिकशोणिम्ना कर्त्रा यस्य वक्त्रं न्यक्कुर्वाणं धिक्कारि सिंहीसंहारशौण्डः सैंहिकी नाम राक्षसी तन्नाशक इत्यर्थः सः गान्धवाहिः हनूमान् बन्धुरं उच्चावचं कलुषं हरतु । स्वभावोक्त्यलङ्कारः ॥ ८४ ॥

**दिङ्नागारब्धपादः कमठपरिवृढः प्राञ्चनिर्व्यूढपृष्ठः**
**कद्रूपुत्रेशसारग्रथितघनभुजादण्डयुग्मः पटीयान् ।**

दंष्ट्रीशारब्धसद्यःकनकगिरितटीकर्कशस्थूलवक्षा
यः कोऽपि स्यान्नभस्वद्बटुरिव पटुतां नाधिगच्छज्जगत्याम्
॥ ८५ ॥

दिगिति । दिङ्नागारब्धपादः दिग्गजबलारब्धपादः कमठपरिवृढप्रांशु–निर्व्यूढपृष्ठः महाकमठेन प्रांशु निर्व्यूढपृष्ठः कद्रूपुत्रेशस्य शेषस्य सारेण ग्रथितः निर्मितमहाभुजयुगलः इत्यर्थः दंष्ट्रीशः महावराहारब्धस्सद्यः कनकगिरितटीमेरुप्रदेश इव कर्कशः दृढः स्थूलं वक्षो यस्य स तथोक्तः पटीयान् समर्थः यः कोऽपि स्यात् यश्च न भवेदपीत्यर्थः । नभस्वद्बटुरिव हनूमानिव जगत्यां पटुतां बलितां नाधिगच्छेत् न प्राप्नुयात् । अतिशयोक्तिः ॥ ८५ ॥

प्रस्थानं योजनानामपरिमितशतं स्पन्दमात्रं यदङ्घ्र्योः
संहारस्सर्वरक्षःपरिवृढविततेस्सङ्गरारोप एव ।
आविध्यण्डं प्रवृद्धिर्भवति भुवि सुखासीनता येन दृष्ट्या
तस्मै स्पर्धेत को वा समिति बलवतामञ्जनासूनवेऽपि
॥ ८६ ॥

प्रस्थानमिति । यस्य दृष्ट्या योजनानामपरिमितं शतं प्रस्थानं यदङ्घ्र्योः स्पन्दमात्रं पादप्रसृतिप्रायम् । रक्षस्संहारः सङ्गरारोप एव युद्धसम्भावनैव। यस्य सुखासीनता सुखासनबन्धः आविध्यण्डं ब्रह्माण्डपर्यन्तं वृद्धिर्भवति तस्मै अञ्जनासूनवे बलवतां मध्ये कः स्पर्धेत स्पर्धां कुर्यादित्यर्थः । स्वभावोक्तिरलङ्कारः ॥ ८६ ॥

शृङ्गं सौमेरवं प्राग्भुजगपतिपरीवेष्टितं प्राग्विदूर –
स्पर्धाळुर्गन्धवाहस्स्वयमतिरभसात् क्षिप्तवान् सप्तधापि।

**ऊर्मित्वेनैव धर्तुं तमपि तदपि तत्कर्णिकात्वेन कृत्वा**
**हस्ताङ्गुल्यग्रभागे वलयितवपुषं शक्नुयात् पावनिश्चेत् ॥**
**॥ ८७ ॥**

शृङ्गमिति । सौमेरवं मेरुसम्बन्धि शृङ्गं शिखरं भुजगपतिः शेषः तेन परिवेष्टितं । प्राक्स्पर्धालुः स्पर्धां कुर्वाणस्सन् सप्तधा गन्धवाहः स्वयमतिवेगात् विदूरे उत्क्षिप्तवान् दूरमुत्पातयामासेत्यर्थः । पावनिश्चेत् हनूमान् तदपि शृङ्गमपि कर्णिकात्वेन कृत्वा कर्णिकारूपं कृत्वा हस्ताङ्गुल्यग्रभागे अङ्गुल्यञ्चले वलयितवपुषं वलयाकारशरीरं तं शेषम् अङ्गुलीयकरूपे धर्तुं शक्नुयात् समर्थो भवेदित्यर्थः । अत्र हनूमति तदपेक्षया आधिक्यं व्यज्यते ॥ ८७ ॥

**बन्धुर्बन्धूकभासां कुलगुरुररुणप्रौढपङ्केरुहाणां**
**कङ्केलिप्रेममित्रं मसृणघसृणजोच्छ्रायसब्रह्मचारी ।**
**पाकक्रीडाधुरीणप्रथमगिरिशिखालम्बिनस्तेन भानो -**
**स्सूनोर्वातस्य दोष्णोर्विलसतितरुणप्रौढतावान् प्रतापः ॥**
**॥ ८८ ॥**

बन्धुरिति । बन्धूकभासां बन्धूकच्छवीनां बन्धुः अनुकूलः । रक्तपद्मानां कुलगुरुः सम्प्रदायप्रवर्तकः । कङ्केलिप्रेममित्रं रक्ताशोकप्रसवमित्रम् । मसृणघसृणं तज्जन्योच्छ्रायः तत्सम्भवातिशयः तेन सब्रह्मचारी सतीर्थः। प्रथमगिरिशिखालम्बिनः भानोः बालसूर्यस्य पाकक्रीडाधुरीणः पांसुश्रियाधुरीणः वातस्य सूनोः हनूमतः भुजयोः तरुणः नूतनः प्रौढतावान् प्रगल्भः प्रतापः पराक्रमः विलसति विभाति । उल्लेखालङ्कारः ॥ ८८ ॥

**अत्युद्दण्डाभियाति प्रमथनकुपितोद्दण्डवालाभिघात -**
**क्षीणस्तोकेतराब्दप्रपतनकपटामर्त्यलाजप्रवर्षः ।**

नाकौकस्त्रीकपोलस्थलकृतमकरीपत्रतत्तावलम्बः
कम्बुश्रीराघवेन्दोः त्रिभुवनविजयी भाति धीमान् हनूमान्
॥ ८९ ॥

अत्युद्दण्डेति । अत्युद्दण्डा उद्भटा तेषामरीणां प्रमथने कुपितेन कोपेन उद्दण्डः उत्कटः वालाभिघातः पुच्छताडनं तेन क्षीणाः स्तोकेतराः अल्पाः अब्दास्त एव प्रपतना प्रतिप्लवाः कपटामर्त्याः त एव लाजाः तेषां प्रवर्षं यस्य सः । नाकौकस्त्रीणां देवस्त्रीणां कपोलस्थलेषु गण्डपाळीषु कृतानि मकरीपत्राणि तेषां दत्तावलम्बः श्रीरामस्य त्रिभुवनविजयी त्रिलोकजयिष्णुः कम्बुः धीमान् हनूमान् भाति स्फुरति । रूपकालङ्कारः ॥ ८९ ॥

बाहूदन्ताग्रघातक्षुभितरिपुपुरीसौधनिर्धूननो –
द्यद्धूलीस्थानं धयालिप्रघटितकठिनोदारकण्डूलगण्डः ।
द्वैतीयीकाभ्यतादृग्रसझररसमदोत्तालनिर्वेदलीलो
वालं शुण्डाविधून्वन् विलसति समरे मारुतिर्व्यालहस्ती
॥ ९० ॥

बाह्वेति । बाह्वेव दन्तौ तयोरग्रभागाभ्यां घातेन करणेन क्षुभिता रिपुपुरी तस्यां सौधानि तेषाम् निर्धूननेन उद्घातेन उद्यदुत्थिता धूळीस्थानं धयाळिरल्पधूळिस्तया प्रघटितौ व्याप्तौ कठिनौ उदारौ कण्डूलौ गण्डौ यस्य स तथोक्तः । द्वैतीयीकः द्वितीयः तादृग्रसझरः वीररसप्रवाहः तेन समदा उत्तालाः अधिका निर्वेला उद्वेला लीला यस्य स तथाभूतः वालं तत् स्वेषां शुण्डां विधून्वन् चालयन् मारुतिः व्याळहस्ती हनूमदाख्यो धूर्तगजो विलसति भाति । रूपकालङ्कारः ॥ ९० ॥

व्यापादो दोषभाजामवनमपि सतामैश्वरं कृत्यमेत –
त्तद्वायुसूनोर्द्वितयमपि पराधीनता शून्यमेव ।

यद्रक्षः कालरुद्रो भवति स जननानेहसो राघवार्थे
स्रष्टुं शिष्टानशेषानपि चतुरधिकं भावि वेधस्त्वमस्य ॥
॥ ९१ ॥

व्यापाद इति । दोषभाजां दुष्टानां व्यापादः संहारः सताम् अवनमपि ऐश्वरं कृत्यम् । तदेतत् द्वयमपि वायुसूनोः पराधीनताशून्यमेव । यस्मात् हेतोः स हनूमान् जननानेहसः जननावधि राघवार्थे रामकार्ये रक्षः कालरुद्रः राक्षसनाशकः अस्य हनूमतः अशेषान् शिष्टान् स्रष्टुं तदधिकं भाविवेधस्त्वं भविष्यच्चतुर्मुखत्वं चेति । रूपकालङ्कारः ॥ ९१ ॥

अक्षय्योदारशक्तिं निजभुजशिखरे लक्ष्मणं धारयित्वा
वृद्धिं यातस्य भूयो विधिसदनसभासौधपर्यन्तमुच्चैः ।
प्रातर्मध्याह्नसायन्तनविहितमपि प्रत्यवायापनुत्यै
ब्राह्म्यं कर्मापि वेदोदितमनिलवटोस्स्वर्नदीतोय एव ॥
॥ ९२ ॥

अक्षय्येति । अक्षय्या नित्या उदारा शक्तिः यस्य तं लक्ष्मणं निजभुजशिखरे दोर्मस्तके धारयित्वा विधिसदनसभासौधपर्यन्तं ब्रह्मलोकपर्यन्तं भूयः उच्चैः वृद्धिं यातस्य अनिलवटोः मारुतेः प्रत्यवायापनुत्यै दोषपरिहाराय प्रातर्मध्याह्नसायन्तनविहितं कालत्रयप्राप्तं वेदोदितं ब्राह्म्यं कर्मापि स्वर्नदीतोय एव स्वर्गङ्गायामेव । उत्प्रेक्षालङ्कारः ॥ ९२ ॥

आतारं वर्धमाने वपुषि हनुमतः ऊर्ध्वमूर्ध्वं निशायां
इन्द्रारातेर्जयार्थे मखभुगधिपतेः शस्त्रतः कर्कशे द्राक् ।
अर्कभ्रान्त्या ग्रसेन्मामिति चकितमनास्सन्निधिस्थं सुधांशुः
वैलक्षण्यप्रबोधं वपुषि जनयितुं लक्ष्म धत्ते कळङ्कम् ॥
॥ ९३ ॥

**आतारमिति** । इन्द्राराते: इन्द्रजित: जयार्थे विजयाय निशायाम् आतारं नक्षत्रलोकपर्यन्तं मखभुगधिपते: शक्रस्य शस्त्रत: वज्रात् कर्कशे कठिने हनूमत: वपुषि उध्र्वोर्ध्वम् उपर्युपरि वर्धमाने सति द्राक् झटिति अयं सन्निधिस्थं समीपवर्तिनं मां ग्रसेत् भक्षयेदिति चकितमना भीतहृदय: सुधांशु: चन्द्र: वपुषि स्व इति शेष: । वैलक्षण्यप्रबोधनाय सूर्य इति ज्ञानं जनयितुम् उत्पादयितुं विनीलं कळङ्कं धत्ते कृतवान् । उत्प्रेक्षालङ्कार: ॥ ९३ ॥

**साहङ्कारान् सुरौघानसुरपरिवृढान् क्षिप्तमन्थानशैलान्**
**अम्भोधिर्भूरिगर्ते हसितुमिव धृतिक्ष्माधरेणाच्युतेन ।**
**लङ्काम्भोधिं मथित्वा क्षुभितनिशिचरानीकयाद:प्रपञ्चं**
**लेभे यत्कीर्तिसारामृतमनिलसुतस्सेवतादादराद्व: ॥**
**॥ ९४ ॥**

**साहङ्कारानिति** । य: हनूमान् साहङ्कारान् गर्विष्ठान् अम्भोधे: समुद्रस्य गर्ते कुहरे क्षिप्तमन्थानशैलान् पातितमन्थानाचलान् सुरौघान् असुरपरिवृढान् च हसितुमिव अच्युतेन च्युतिरहितेन धृतिरेव क्ष्माधर: तेन साधनेन क्षुभिता निशिचरा: त एव याद:प्रपञ्चम् उदकराशिम् लङ्काम्बोधिं लङ्कापुर्येव समुद्रं मथित्वा निर्मथ्य कीर्तिसार एव अमृतं लेभे प्राप स: आदरात् व: अवतात् रक्षतात् । उत्प्रेक्षालङ्कार: सव्यतिरेकालङ्कारगर्भश्च ॥ ९४ ॥

**तत्तादृग्राघवेन्दोरनितरसुलभख्यातिशातोदरी या**
**व्रीडाविस्रम्भकृत्ये निशि कमलभुवा निर्मिता स्वैरमाजौ।**

रेजे यद्वालवल्लीविलसदुडुगणप्रौढमल्लीं प्रसूना
निस्त्रासो वायुसूनोर्निरवधिककृपः सन्ततं त्रायतां वः ॥
॥ ९५ ॥

तदिति । [1]तादृशं ..........



१. एतदनन्तरं ग्रन्थभागः विनष्टः । पञ्चनवतितमपद्यपर्यन्तमेव ग्रन्थभागः दृश्यते । तत्रापि पञ्चनवतितमपद्यस्य व्याख्याभागोऽपि नास्ति । हस्तप्रत्यन्तरमपि नास्ति। यतः एकैव हस्तप्रतिः लभ्यते । सा तावत् मैसूरुप्राच्यविद्यासंशोधनालये एवास्ति । नान्यत्र ।

## आञ्जनेयशतकस्य अकारादिपद्यसूची

